TRIVANDRUM SANSKRIT SERIES
No. CXXXII.

Śrī Citrodayamañjarī.
No. XXI.

# THE
# TANTROPĀKHYĀNA

EDITED BY
K. SĀMBAŚIVA ŚĀSTRĪ,
*Curator of the Department for the Publication of Oriental Manuscripts, Trivandrum.*

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJA OF TRAVANCORE.

TRIVANDRUM:
PRINTED BY THE SUPERINTENDENT, GOVERNMENT PRESS,
1938

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १३२.

श्रीचित्रोदयमञ्जरी ।

ग्रन्थाङ्कः २१.

---

# तन्त्रोपाख्यानम्

पौरस्त्यग्रन्थप्रकाशनकार्याध्यक्षेण

के. साम्बशिवशास्त्रिणा

संशोधितम् ।

---

तच्च

अनन्तशयने

महोन्नतमहामहिमश्रीचित्रावतारमहाराजशास

राजकीयमुद्रणयन्त्रालये तदध्यक्षेण

मुद्रयित्वा प्रकाशितम् ।

---

कोलम्बाब्दाः १११३. क्रैस्ताब्दाः १९३८.

॥ श्रीः ॥

श्रीमूलावनिपालमौलिमणिना सङ्कल्पितश्रीरिव
श्रीमूलात्मजनिस्तथा सहजया लक्ष्म्या च सम्भावितः ।
स्वातिज्योतिरिवोदितः समुदितश्चित्रावतारः स्वयं
मार्ताण्डाग्रसरो विराजति महाराजः स रामाभिधः ॥

भास्वद्वर्णमणिः प्रवालमृदुला श्रुत्याद्यलङ्कारिणी
श्रीमद्वञ्चिवसुन्धरानवयशोराशिप्रकाशात्मिका ।
उत्फुल्लत्सुकृतिप्रसाधनधृतामोदोन्नदड्डिण्डिमा
श्रीचित्रोदयमञ्जरी सुमनसां सर्वस्वमुज्जृम्भताम् ॥

के. साम्बशिवशास्त्री.

# PREFACE

Tantropakhyana, a simple prose production will indubitably be of profound utility to the beginners in the study of Sanskrit The apologues drawn from the animal kingdom have each some moral to inculcate and hence, I think, the work is aptly designated Tantropakhyana There are three Prakaranas in it In these, the author attempts to bring out by means of fables of bull, swan, frog etc., setting forth their well being and prosperity, the importance of shunning bad company and thoughtless actions, and the desirability of winning steady friends He has expressed this explicitly in the following lines

> "ईश्वराणामिदं तन्त्रं प्रायेणौत्सुक्यमावहेत् ।
> यतस्तिरश्चां चरितैर्नीतिमार्गः प्रदर्श्यते ॥
>
> अर्थे भवेत्प्रयत्नानामाख्यानश्रवणे सुखम् ।
> ज्ञानार्थं च सुखार्थं च तन्त्रोपाख्यानमुच्यते ॥
> दुर्मेधसामसह्यं च आतुराणां च यमावहेत् ।
> इतिहासे कृते नाम्नमतो नीतिनिबन्धनम् ॥"

(पृ० १, श्लो० ३—५)

The celebrated Pancatantra of Visnusarma aims at imparting useful instruction, on the principles of ethics, to princes of tender age through simple stories, classified under the five Tantras — Mitrabheda, Mitraprapti, Kakolukiya, Labdhapranasa and Apariksitakaraka Nothing is plausible to disclose whether the present tales are an adaptation of Pancatantra, or a reflex of the ideas embodied therein The book however, contributes a good deal to the knowledge of moral philosophy by the exposition of the two Tantras, namely, the winnig of friends and thoughtful actions No clue is evinced by this work for the determination of its author Let me, however, close for the present with the sanguine hope of finding a better opportunity to penetrate into the thickly enshrouded questions of his time and place

The publication is based on the manuscripts obtained from the library of Kudallur Brahmadattan Namputirippad, Pattambi, to whom my grateful thanks are due I have great pleasure in introducing this book to the enlightened public

Trivandrum,
13-12 112

K SAMBASIVA SASTRI

॥ श्रीः ॥

# निवेदना ।

---

तन्त्रोपाख्यानं नाम किमपि लघुतरगद्यनिबन्धनमिदं पाठालयेषु बालानां प्रथमशिक्षाकक्ष्यासूपयोगाय प्रचुरतरं पर्याप्तम् । पक्षिमृगादीनास्पदीकृत्य तन्त्रेण सदुपदेशपर्यवसायिनः संख्याधिकाः कथाभागा इहोपाख्याता मन्ये नामधेयमन्वर्थं तन्त्रोपाख्यानमिति वदन्ति । अत्र च प्रकरणत्रयी दृश्यते । यस्यां — वृषभं हंसं मण्डूकं च प्रवेश्य तदीययोगक्षेमकथाप्रसङ्गैः नीचसंसर्गपरिहाणमविमृश्यकारितापरित्यागं सुमित्रसम्पादनश्रद्धां च लोकाः समुपदिश्यन्ते। ग्रन्थकारप्रतिज्ञयैव तदिदं सुष्ठु स्पष्टम् । तथाहि —

"ईश्वराणामिदं तन्त्रं प्रायेणौत्सुक्यमावहेत् ।
यतस्तिरश्चां चरितैर्नीतिमार्गः प्रदर्श्यते ॥

अर्थे भवेन्नयज्ञानमाख्यानश्रवणे सुखम् ।
ज्ञानार्थं च सुखार्थं च तन्त्रोपाख्यानमुच्यते ॥

दुर्ग्रहत्वान्महच्छास्त्रं श्रोतुरालस्यमावहेत् ।
इतिहासे कृतं शास्त्रमतो नीतिनिबन्धनम् ॥"

(पु० १. श्लो० ३—५.)

अस्ति च सुप्रसिद्धं पञ्चतन्त्रं नाम विष्णुशर्मप्रणीतं सुकुमारमतीन् राजकुमारान् नयशास्त्राणि सुललितेन कथानकेन पथा ग्राहयितुम् । तत्र च मित्रभेद-मित्रप्राप्ति काकोलूकीय-लब्धप्रणाशापरीक्षितकारकाख्यानि पञ्च तन्त्राणि प्रथन्ते । मन्ये तदिदं सारभूतं ततो वा सञ्चितसङ्गृहीतमुताहो तदेवैतो विपुलितप्रतिफलितमिति वस्तुतत्त्वं विविच्य निर्धारयितुं न समनुकूलाः पन्थानो विवृताः । सर्वथा निर्बाधां मित्रप्राप्तिं विमृश्यकारिताविजृम्भितां तन्त्रेणोपदिशती द्वे अपीमे निबन्धने नीतिशास्त्रसारसम्पुटिते नितरा सोपयोगे इति निश्चप्रचम् ।

प्रस्तुतस्योपाख्यानस्य कर्ता तु क इति न ज्ञायते । देशकालादिरप्यस्य जीवितसमयादिवस्तुशसी काममन्धकारग्रस्तो न दृष्टिपथमवतरतीति तदीयतत्त्वविचिन्तनायै समुचितशुभोदर्कमवसरं प्रतीक्षमाणः सद्यो विरमामि ।

अस्य च प्रसाधनावलम्बभूता मातृका ब्रह्मश्री कूटल्लूर् ब्रह्मदत्तन् नम्पूरिप्पाड्ग्रन्थालयादधिगतेति तत्स्वामिभ्यो महतीं कृतज्ञतामनुस्मरन्नस्मि तदिदमुपाख्यानं सादरं महतां समक्षमुपहरामि ॥

अनन्तशयनम्, }
१३-१२-११२ }

के. साम्बशिवशास्त्री.

॥ श्रीः ॥

# तन्त्रोपाख्यानम् ।

## १. नन्दकप्रकरणम् ।

देवदेवं जगद्योनिं प्रणम्य वृषभध्वजम् ।
तन्त्रोपाख्यां प्रवक्ष्यामि शृणुतैनां मनीषिणः ! ॥ १ ॥

यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित् ।
इति वाक्यं मुनेस्तस्मादियं सा भारती कथा ॥ २ ॥

ईश्वराणामिदं तन्त्रं प्रायेणौत्सुक्यमावहेत् ।
यतस्तिरश्चां चरितैर्नीतिमार्गः प्रदर्श्यते ॥ ३ ॥

अर्थे भवेन्नयज्ञानमाख्यानश्रवणे सुखम् ।
ज्ञानार्थं च सुखार्थं च तन्त्रोपाख्यानमुच्यते ॥ ४ ॥

दुर्ग्रहत्वान्महच्छास्त्रं श्रोतुरालस्यमावहेत् ।
इतिहासे कृतं शास्त्रमतो नीतिनिबन्धनम् ॥ ५ ॥

हिताहितप्राप्त्यवमर्शपेशला
कुतस्तिरश्चामियमीदृशी गतिः ।
कुतश्च वागित्यविचार्य केवलं
कवेरभिप्रायगतं निबोधत ॥ ६ ॥

अस्ति खलु जम्बूद्वीपललामभूतं कैलासशिखरप्रासादसहस्रं दृढनिबद्धकवाटतोरणरुचिरद्वारममरनगरमिव भूमाववतीर्णं पाटलिपुत्रं नाम नगरम् । तत्र भरतकुलप्रसूतः सर्वजननिवहैः स्वगृहनिर्विशेषमुपभुज्यमानविभवो दुर्व्यवहारविमुखः सुव्यवहारकुशलः सकलजनमनोभिरामरूपो धर्मस्वामी नाम श्रेष्ठिपुत्रो बभूव । स कदाचिच्छकटसहस्राण्यायोज्य व्यापारनिमित्तं नगरजनसमुदितामवन्तीजन(पद ?)-पदालङ्कारभूतां राज्ञा हेहयकेतुना शिवेन च महाकालेन सन्निवेशितामुज्जयिनीं प्रति जगाम । ततो द्विजातिशूद्रवैश्यापूपिकताम्बूलिकगन्धमालाकारमौहूर्तिकादिभिरन्यैश्च शिल्पिपाषण्डप्रभृतिभिरनुगतो

G P T. 1846 500 7 7 1111 D

महासार्थः सज्जनपरिवृतः सर्जार्जुनकदम्बनिम्बपुन्नागबकुलसरल-चम्पकाशोकादिभिरन्यैश्च महीरुहैरुपशोभितामटवीमाससाद। खरतर-किरणपरिशोभितभुवनतले गगनतलमध्यमधिवसति सहस्रदीधितौ तस्य सार्थवाहस्य सर्वशकटाग्रधुरन्धरो जवप्रकर्षोपपन्नः पाण्डराभ्र-सन्निकाशः प्रलयसदृशघोषो महाप्राणः सौवर्णघण्टिकाजालपरिवृतो-रस्को नन्दको नाम धुर्यो गमनवहनपरिश्रान्तः क्षुत्पिपासाभिभूतः सहसैव मूर्च्छितो भूमौ निपपात। ततः शाकटिकः शकटादवतीर्यो-द्वीक्ष्य दुःखितो निवेदनाय स्वामिनमगमत्। ततश्च तमुपचारेणाञ्जलिं कृत्वाब्रवीत्। आर्य! नन्दकस्तावद् भूमौ निश्चेष्टः पतितः, तदेनं द्रष्टु-मागम्यतामिति। स तु सार्थवाहस्तस्य वचनं श्रुत्वा नैतच्छोभनं भविष्यतीति त्वरया जवसम्पन्नमश्वमारुह्य कतिपयजनपरिवृतो गत्वा भूमौ निश्चेष्टं पतितं दृष्ट्वा नन्दकं दुःखितोऽब्रवीत्। अहो नन्दक! त्वमिमां दशां सम्प्राप्तः। अहो मे मन्दभाग्यता। क इदानीं निम्नो-न्नतेषु प्रदेशेषु कर्दमेषु च भारमाक्रष्टुं समर्थः। सार्थस्तावदिमां दु-स्तरामटवीं प्राप्तः पञ्चत्वमापन्नः। अहो कृतान्तो निर्घृण इत्यश्रूणि विमुच्य ब्राह्मणानाहूय सुगतिरयं भवत्विति स्वस्तिवाचं वाचयित्वा *नन्दकरक्षार्थं चतुरः पुरुषान् स्थापयित्वा, 'यदि जीवति तदा परिपाल्य* शनैः शनैरानीयताम्। यदि न जीवेत् तदा अगरुचन्दनादिभिर्दग्ध्वा-गन्तव्यमि'ति निर्दिश्य प्रस्थितः श्रेष्ठिपुत्रः। ततस्तेषु नन्दकरक्षिष्वेको-ऽब्रवीत्। किमिह चिरमास्महे। ध्रुवमयं न जीविष्यति। इयं चाटवी बहुव्यालमृगदस्युतस्कराणां निवासभूमिः। अत्र स्थास्यामो यदि वयं न जीविष्यामः। सर्वो लोकः स्वार्थमेव करोति। स्वाधीनं परिपाल-यति। अस्मासु नष्टेषु अस्मत्पुत्रमित्रकलत्रादयोऽपि नश्येयुरिति। तेनैवमभिहिते द्वितीयोऽब्रवीत्। वयमेव स्वार्थे क्षीणकर्माणः। अतो-ऽस्मानेव नियुज्य प्रस्थितः श्रेष्ठिपुत्रः। प्रायोऽस्यां रजन्यामेव नन्दकं चास्मांश्च व्याघ्रादयो भक्षयिष्यन्ति। श्रेष्ठिपुत्रस्य रक्षिणः पुरुषा बहवः सन्ति। ततो द्वयोरेकोऽब्रवीत्। वयं तु परस्परं शपथं कृत्वात्मकार्यं करिष्यामः। अप्रमाददेशे कतिचिद् दिनानि नीत्वा नन्दको मृत इति स्वामिने निवेदयिष्याम इति। अन्योऽब्रवीत् तस्मिन्नच्छपथं करिष्या-मीति। परस्परं शपथं कृत्वा ते स्वामिनं प्रति ययुः। तेषु प्रस्थितेषु

सायाह्नसमये महता शब्देन पर्जन्यो वर्षति स्म । तेन वर्षेणाप्यायितो नन्दक उन्मील्य वनमालिकासुरभिमन्दवन्यानिलविरचितसुधाशीकरशिशिरं शशिकिरणं चानुभूय समाश्वस्य तैः समीपविन्यस्तं पानीयं पीत्वा तैरेव पुरो विन्यस्तं तृणकवलं गृहीत्वा वालुकाकल्पितप्रपासमीपे पादपमवलम्ब्य शनैश्शनैरुदतिष्ठत् । उत्थाय भूमिगतं पानीयं पीत्वा स्वस्थश्चरितुमारब्धः । अथ तृतीयेऽहनि तं देशमतिक्रम्य जलधर इव नादयंश्च वनान्तरं चङ्क्रम्यमाणस्तस्मिन्नेव वनान्तरे हंसचक्रवाकमधुरस्वरां स्वादूदकां नीलोत्पलादिविराजितां नलिनीमाससाद । तस्यां स्वादु प्रसन्नमम्भः पीत्वा कूलमुत्पाटयन्तं नन्दकं दृष्ट्वा तद्वननिवासिनः क्षुद्रमृगा भीता महाकायमतिगम्भीरध्वनिमेनं स्वरा(ज्ञे ? जे) निवेदयितुमगमन् । ततः स्वदरीगृहद्वारि शिलातलोपविष्टं बहुव्यालमृगैरुपसेव्यमानं स्वरा(जा ? जं) वीक्ष्य त्रायस्व त्रायस्वेति गाढं प्रचुक्रुशुः । ततश्चण्डपिङ्गलो नाम स राजा तान् मा भैष्ट मा भैष्टेत्युक्त्वा कुतो युष्माकं भयमिति पर्यपृच्छत् । ते स्वामिना पृष्टाः, श्रूयताम्, तत् खलु वयं न विद्मः, यत् किञ्चन महाभूतमेकाकि सर्वानेव मृगगणांस्त्रासयद् भ्रमतीत्याचचक्षिरे । तच्छ्रुत्वा राजा पार्श्वगतान् श्रमसहान् निर्भयान् वृकयूनः प्राहिणोत्, तस्य निवासं रूपं च ज्ञात्वा शीघ्रमागम्यतामिति । ततस्ते स्वामिना प्रेषिता (मृग ? वृक)युवानः प्रागमन् । ततः शङ्कितं मृगेन्द्रं दृष्ट्वा तस्य सभायां शम्बरो नाम जम्बुकः साचिव्ये नियुक्तः स मया निगद्यमानं निदर्शनं त्वेकमिदमाख्यानं श्रूयतामिति मृगेन्द्राय व्यज्ञापयत् । स तेनैवं विज्ञापितोऽब्रवीत् । किं किमेतदित्युच्यतामिति । ततः शम्बरः कथयितुमारब्धः --

अस्ति कौशाम्बरी नाम नगरी । तत्र विष्णुगुप्तो नाम राजा चतुरङ्गेन बलेन म्लेच्छानभिभूय महान्तं सङ्ग्रामं कृत्वा ततस्तैर्भग्नो रथमन्यत्राश्वमन्यत्र पदातिमन्यत्र स्थापयित्वैक एव एकेनाश्वेन स्वनगरं प्राविशत् । ततः कश्चिज्जम्बुकस्तदरण्यवासी महा(न्तं ?) युद्धं पश्यन्नासीनो भेरीनिनादं श्रुत्वा विस्मयमाविष्टः सङ्ग्रामभूमिं गत्वा नरगजतुरगान् परित्यज्य भेरीमासाद्यानेन हन्यमानेन महाच्छब्दः

कृतः । ध्रुवमनेन मेदसा पूर्णेन भवितव्यमिति मत्वा यथेष्टं भक्षयामीति सञ्जाताशो भेरीरज्जुं गृहीत्वान्तः प्रविश्य किञ्चिन्नापश्यत् । स चेमं श्लोकमब्रवीत् —

श्रुत्वैव तुमुलं शब्दं मन्येऽहं मेदसा कृतम् ।
अन्तः प्रविश्य जानामि यथा चर्म च दारु च ॥ ७ ॥

इति । तस्माच्छब्दमात्रेण बहुमतिर्न कार्येत्युक्तवान् ।

ततो वृकपुत्रानो दूरत एव न्यग्रोधाभोगतं नन्दकं दृष्ट्वा निवृत्ताः स्वामिनं प्रणम्य प्रोचुः । स्वामिन् ! सरस्तीरे न्यग्रोधे प्रतिवसति महारूपो यः कश्चिन्महाबलोऽदृष्टपूर्वोऽस्माभिरिति । तच्छ्रुत्वा राजा युष्माभिरिहैव स्थातव्यमिति व्यपदिश्य तं देशमगात् । अथ मृगपतिर्वैकदर्पोपपन्नः शारदशशिकिरणविकीर्णसटाच्छटो मत्तमातङ्गकाभेररञ्जितनखमुखोऽपि साशङ्कं नन्दकाभिमुखमाससाद । आसाद्य को भवानित्यपृच्छत् । ततः स वृषभवरः स्वभावधीरो मेघस्तनितगम्भीरस्वरेण मृगेन्द्रं प्रत्यवोचत् । सुपूज्यान्वयो गवां लोके हितार्थं स्वर्गादवतीर्णोऽस्मि । कस्त्वमिति भवान् कथयतु । ततो मृगेन्द्रः प्राह — अस्मिञ्छतयोजनविस्तीर्णे वने सर्वश्वापदानामधिपतिरहं चण्डपिङ्गलो नाम भवन्तं द्रष्टुमागत इति । एवं तयोरन्योन्यसम्भाषणं कुर्वतोः परमप्रीत्या गच्छति काले शम्बरः श्वापदव्याघ्रादिभिर्मन्त्रयित्वा, राजा चिरायते, किंनुखलु भवेत्, गत्वा जानीम इति सर्वे राजपार्श्वमगमन् । ततस्तान् दूरत एव स्थितान् दृष्ट्वा नन्दको जगाद क इमे भवन्तमनुयान्तीति । चण्डपिङ्गलोऽब्रवीत् — नन्वेते त्वद्भृत्या इमानावाययेति । नन्दकोऽब्रवीत् — ये भवतो भृत्यास्ते ममैवेति । चण्डपिङ्गलोऽब्रवीदेतत् सत्यमेवेति । एवमन्योन्यं प्रवृद्धस्नेहयोरनयोः सखित्वेन सुखं गच्छति काले कदाचिद् दुष्टात्मा शम्बरः स्वयमचिन्तयत् । राजानस्तावदव्यग्रमनो भृत्येषु प्रयोजनाभावाद् दुराराधा वैमुख्येन प्रवर्तन्ते । तदमुना कृते विरोधे वयमपि किञ्चित्कारिणो भवाम इति श्वापदानाहूयेदमब्रवीत् । किमप्यस्माकं मन्त्रयितव्यमस्ति, व्याघ्रप्रभृतयः सर्वे आहूयन्तामिति । सर्वे मिथ आहूय परभूम स्थिताः । ततः शम्बर आह । राजा वृषभं सहायं लब्ध्वा

मदुक्तं पथ्यमपि नाभिनन्दति । युष्मास्वपि न यथापूर्वं वर्तते । पूर्वमपरिचितमपि गजगवयरुरुप्रभृतीन् हत्वास्माकं मांसं प्रयच्छति । इदानीं हननान्निवृत्तो वृषभसंसर्गात् स्वयं च तृणं चरिष्यतीति मन्ये । तत् तृणभक्षणमस्माकमपि भविष्यत्येव । तदशक्यं श्वापदानाम् । तस्माद् भयं नो महदागमिष्य(ती?)ति । यथा शुको गवाशनसंसर्गाद् गवाशनशीलमुपशिक्षितवानिति । तच्छ्रुत्वा क्रव्यादाः सर्व एव कथं शुको गवाशनानां शीलमुपशिक्षितः कथ्यतामित्यूचुः । श्रूयतामिति धूम्रः कथयितुमारब्धः —

कश्चिद् राजा मृगयार्थमरण्यमनुप्रविष्टो वातायमानाश्वो वनान्तरे परिभ्रमन् कञ्चन सूकरं दृष्ट्वा तं महत्तमनुसृत्य पलायमानो गवाशनानामावासं प्राप्तः । पुरैव गवाशनाः कार्यार्थं बहिरगच्छन् । तत्र गिरिको नाम शुकः पन्थानं द्रष्टुं वृक्षोपरि स्थितवान् । स दूरत एव राजानं दृष्ट्वा पक्षौ विधूय चञ्चुमपि चटचटं कृत्वा, प्रहर प्रहर, गृहाण गृहाण, मारय मारयामुष्मात् सर्वस्वं गृह्यतां, हत्वेमं श्वभ्रो दीयतामित्युच्चैस्तरामाक्रोशति स्म । तच्छ्रुत्वा विस्मितो राजा तं देशं दूरतरमतिक्रम्य मुनीनामाश्रमं जगाम । तत्र चाश्रमवासी शुकोऽथ राजानं दृष्ट्वा स्वागतमार्य! प्रविश्यताम् । आसनं पाद्यमाचमनीयं चानीयताम् । अद्य सनाथमाश्रमपदम् । स्वादुफलानि पक्वानि मूलानि चोपहरेतेत्यब्रवीत् । ततो राजा तद्वचनं श्रुत्वा विस्मितः शुकं पर्यपृच्छत् । अस्मिन् वनान्तरे शबरकुटीरे निवसता केनापि शुकेन सन्तर्ज्य परुषमुक्तः । इदानीं तव वाक्यैरमृतोपमैः सन्तर्पितोऽस्मि । कथं युवयोरेकजातिप्रसूतयोः शीलविपर्यासः । ततः शुकः प्राह — अस्त्येव मम कनीयान् स इति । श्लोकावप्यब्रवीत् —

माताप्येका पिताप्येको मम तस्य शुकस्य च ।
अहं मुनिभिरानीतः स चानीतो गवाशनैः ॥ ८ ॥

अहं मुनीनां वचनं शृणोमि
गवाशनानां स वचः शृणोति ।
प्रत्यक्षमेतद् भवतापि दृष्टं
संसर्गजा दोषगुणा भवन्ति ॥ ९ ॥

कृतः । ध्रुवमनेन मेदसा पूर्णेन भवितव्यमिति मत्वा यथेष्टं भक्षयामीति सञ्जाताशो भेरीरज्जुं गृहीत्वान्तः प्रविश्य किञ्चिन्नापश्यत् । स चेमं श्लोकमब्रवीत् —

श्रुत्वैव तुमुलं शब्दं मन्येऽहं मेदसा कृतम् ।
अन्तः प्रविश्य जानामि यथा चर्म च दारु च ॥ ७ ॥

इति । तस्माच्छब्दमात्रेण बहुमतिर्न कार्येत्युक्तवान् ।

ततो वृकपुत्रानो दूरत एव न्यग्रोधाधोगतं नन्दकं दृष्ट्वा निवृत्ताः स्वामिनं प्रणम्य प्रोचुः । स्वामिन् ! सरस्तीरे न्यग्रोधे प्रतिवसति महारूपो यः कश्चिन्महाबलोऽदृष्टपूर्वोऽस्माभिरिति । तच्छ्रुत्वा राजा युष्माभिरिहैव स्थातव्यमिति व्यपदिश्य तं देशमगात् । अथ मृगपतिर्बलदर्पोपपन्नः शारदशशिकिरणविकीर्णसटाच्छटो मत्तमातङ्गरुधिररञ्जितनखमुखोऽपि साशङ्कं नन्दकाभिमुखमाससाद । आसाद्य को भवानित्यपृच्छत् । ततः स वृषभवरः स्वभावधीरो मेघस्तनितगम्भीरस्वरेण मृगेन्द्रं प्रत्यबोधयत् । सुपूज्यान्वयो गवां लोके हितार्थं स्वर्गादवतीर्णोऽस्मि । कस्त्वमिति भवान् कथयतु । ततो मृगेन्द्रः प्राह — अस्मिञ्छतयोजनविस्तीर्णे वने सर्वश्वापदानामधिपतिरहं चण्डपिङ्गलो नाम भवन्तं द्रष्टुमागत इति । एवं तयोरन्योन्यसम्भाषणं कुर्वतोः परमप्रीत्या गच्छति काले शम्बरः श्वापदव्याघ्रादिभिर्मन्त्रयित्वा, राजा चिरायते, किंनुखलु भवेत्, गत्वा जानीम इति सर्वे राजपार्श्वमगमन् । ततस्तान् दूरत एव स्थितान् दृष्ट्वा नन्दको जगाद क इमे भवन्तमनुयान्तीति । चण्डपिङ्गलोऽब्रवीत् — नन्वेते त्वद्भृत्या इमानाज्ञापयेति । नन्दकोऽब्रवीत् — ये भवतो भृत्यास्ते ममैवेति । चण्डपिङ्गलोऽब्रवीदेतत् सत्यमेवेति । एवमन्योन्यं प्रवृद्धस्नेहयोरनयोः सखित्वेन सुखं गच्छति काले कदाचिद् दुष्टात्मा शम्बरः स्वयमचिन्तयत् । राजानस्तावदप्रत्नो भृत्येषु प्रयोजनाभावाद् दुराराधा वैमुख्येन प्रवर्तन्ते । तदमुना कृते विरोधे वयमपि किञ्चित्कारिणो भवाम इति श्वापदानाहूयेदमब्रवीत् । किमप्यस्माकं मन्त्रयितव्यमस्ति, व्याघ्रप्रभृतयः सर्वे आहूयन्तामिति । सर्वे मिथ आहूय सम्भूय स्थिताः । ततः शम्बर आह । राजा वृषभं सहायं लब्ध्वा

मदुक्तं पथ्यमपि नाभिनन्दति । युष्मास्वपि न यथापूर्वं वर्तते । पूर्वमपरिचितमपि गजगवयरुरुप्रभृतीन् हत्वास्माकं मांसं प्रयच्छति । इदानीं हननान्निवृत्तो वृषभसंसर्गात् स्वयं च तृणं चरिष्यतीति मन्ये । तत् तृणभक्षणमस्माकमपि भविष्यत्येव । तदशक्यं श्वापदानाम् । तस्माद् भयं नो महदागमिष्य(ती?)ति । यथा शुको गवाशनसंसर्गाद् गवाशनशीलमुपशिक्षितवानिति । तच्छ्रुत्वा क्रव्यादाः सर्व एव कथं शुको गवाशनानां शीलमुपशिक्षितः कथ्यतामित्यूचुः । श्रूयतामिति सम्बरः कथयितुमारब्धः —

कश्चिद् राजा मृगयार्थमरण्यमनुप्रविष्टो वातायमानाश्वो वनान्तरे परिभ्रमन् कञ्चन सूकरं दृष्ट्वा तं महर्तमनुसृत्य पलायमानो गवाशनानामावासं प्राप्तः । पुरैव गवाशनाः कार्यार्थं बहिरगच्छन् । तत्र गिरिको नाम शुकः पन्थानं द्रष्टुं वृक्षोपरि स्थितवान् । स दूरत एव राजानं दृष्ट्वा पक्षौ विधूय चञ्चुमपि चटचटं कृत्वा, प्रहर प्रहर, गृहाण गृहाण, मारय मारयामुष्मात् सर्वस्वं गृह्यतां, इत्थेमं अश्वो दीयतामित्युच्चैस्तरामाक्रोशति स्म । तच्छ्रुत्वा विस्मितो राजा तं देशं दूरतरमतिक्रम्य मुनीनामाश्रमं जगाम । तत्र चाश्रमवासी शुकोऽथ राजानं दृष्ट्वा स्वागतमार्य ! प्रविश्यताम् । आसनं पाद्यमाचमनीयं चानीयताम् । अद्य सनाथमाश्रमपदम् । स्वादुफलानि पक्वानि मूलानि चोपहरेत्यब्रवीत् । ततो राजा तद्वचनं श्रुत्वा विस्मितः शुकं पर्यपृच्छत् । अस्मिन् वनान्तरे शबरकुटीरे निवसता केनापि शुकेन सन्तर्ज्य परुषमुक्तः । इदानीं तव वाक्यैरमृतोपमैः सन्तर्पितोऽस्मि । कथं युवयोरेकजातिप्रसूतयोः शीलविपर्यासः । ततः शुकः प्राह — अस्त्येव मम कनीयान् स इति । श्लोकावप्यब्रवीत् —

माताप्येका पिताप्येको मम तस्य शुकस्य च ।
अहं मुनिभिरानीतः स चानीतो गवाशनैः ॥ ८ ॥

अहं मुनीनां वचनं शृणोमि
गवाशनानां स वचः शृणोति ।
प्रत्यक्षमेतद् भवताथ दृष्टं
संसर्गजा दोषगुणा भवन्ति ॥ ९ ॥

यथा वृषभसंसर्गाद् दोषवान् न भविष्यति राजा, वयं तथा प्रवर्तामहे । मम वाक्यं साधु रोचतां युष्माकम् । सुहृद्वचनाकारिणः कच्छपस्येव युष्माकं सर्वेषां विनाशो मा भूदित्युक्तवान् । ततः सर्वे एव ते कच्छपविनाशं श्रोतुमिच्छाम इत्यब्रुवन् । ततः शम्बरः प्राह —

अस्ति खलु महत्यटव्यन्तरे विपुलविस्तीर्णं सरः । तस्मिन् सरसि मानसवासिनो हंसाः केनापि कच्छपेन सह प्रतिवसन्ति स्म । अथ कदाचित् सरो ग्रीष्मकाले स्वल्पोदकमभूत् । तस्मिन् प्रतिवसितुमशक्नुवन्तो हंसाः सरश्शोषदुःखितं परममित्रं चरमवयःप्राप्तमूचुः । मानसोऽपि वैरस्माभिर्भवत्सौहृदाच्चिरमत्रोषितम् । इदमपि शुष्कं पङ्कावशेषमभूत् सरः । ततो वयं मानसं सरः प्रतियास्यामः । त्वयास्मदनुकम्पयास्माभिः सहागम्यताम् । केनाप्युपायान्तरेण भवन्तमादाय गन्तुं समर्था इति । एवं श्रुत्वा कच्छपोऽपि भवद्भिः सहागमिष्यामीति प्राह । त्वयैतद् काष्ठमध्यं दष्ट्वा स्थातव्यम् । अस्माभिः काष्ठकोटिद्वयं दष्ट्वा नेतव्यमिति । केनापि (न?) त्वं पृष्टः प्रतिवचनं मा देहीत्युपदिश्य तथा खमुत्पेतुः । अथ कश्चित् क्रोष्टा भार्यया सह बदरफलानि खादन्नासीन आकाशे नीयमानं कच्छपमालोक्य विहस्यैवमब्रवीत् — भद्रे! पश्य भिन्नजातीयैर्देशान्तरवासिभिः परवञ्चनापटीयोभिर्नीयमानं कच्छपमूर्खमिति । तच्छ्रुत्वा कच्छपोऽत्यन्तरोषेण हंसोपदिष्टं वाक्यं विस्मृत्य किं ते शिरोरोगस्त्वं मूर्ख इति वक्तुकामो भूमौ निपपात । पतितं कच्छपं दृष्ट्वा द्रुततरमागम्य भार्यया सह भक्षितवान् क्रोष्टा । ततो हंसाः परित्रातुमशक्नुवन्तः साश्रुमुखाः परवञ्चनापटीयांसं स्वार्थसाधकमपि गर्हयन्तो विरगमन् । ततस्तान्निरीक्ष्य वसुभागः श्लोकमवोचत् —

> मित्राणां हितकामानां यो वाक्यं नानुतिष्ठति ।
> स कूर्म इव दुर्बुद्धिः काष्ठाद् भ्रष्टो विनश्यति ॥ १० ॥

एवं शम्बरवाक्यं श्रुत्वा सर्वे पवानुमान्य श्वापदस्वामीव वयं चास्या आपदः परिरक्षणीया इत्यभिधाय स्वं स्वं वासं जग्मुः । ततः कदा-

चिच्छम्बरः चण्डपिङ्गलस्य वृषभस्य च विरहं लब्ध्वा भेदाय वृषभं स विनयेनोपगम्य(स्थितः। तं)किमागमनप्रयोजनमिति नन्दकः पप्रच्छ। शम्ब(रो? रेण) रहस्येव कथयामीत्युक्तो नन्दको निश्शङ्कमभिधीयतामित्यवोचत्। ततः शम्बर आह—भवत्स्नेहान्मम दोषावहमपि कथयामि। तव प्रसन्नगम्भीरमधुरस्वरं च सदयं निरीक्षणं च सर्वप्राणिपरिरक्षणं महासत्त्वं च बहुधा विकल्प्य त्वय्यस्माकं महान् प्रवर्तते स्नेहः। कं वा महानुभावगुणो नानुरञ्जयेत्। तव(त्त ? त्त्व)द्वचनं कस्मैचिन्नाभिधास्यामि इति तं प्रत्ययं कारयित्वा कथयति स्म। एतद्वनवासिनः पराधीनाः। त्वयि प्रवृद्धस्नेहानस्मान् सर्वानालक्ष्य भवतो निरतिशयवीर्यशीलदाक्षिण्यादिगुणान् बहुधा विकल्प्यास्माकं राजा त्वय्युत्पन्नशङ्को भूत्वास्माकं पूर्ववृत्तमाख्यानं प्रमाणभूतमकथयत्। नन्दकस्तच्छ्रुत्वा कथमित्याह। शम्बरः कथयति—

कस्यचिद् राज्ञः शयनप्रवरे आषाढसंज्ञको यूकः प्रतिवसति स्म सुखसञ्चाराहारशयनः। तत्र कदाचिन्मत्कुणं स्वयमागतं दृष्ट्वा यूकः पप्रच्छ— कोऽत्र भवान्, कस्मादागत इति। मत्कुणः प्राह— मत्कुणश्चण्डिलनामधेयोऽहममुष्माद् भित्तिच्छिद्रादागत इति। यूकोऽब्रवीत् — भवांस्तीक्ष्णश्चपलः। न त्वं मामनुवर्तसे। अस्यां राजशय्यायां किञ्चिदप्यशोभनं मा कार्षीः। अहं तु पुनरन्यासु शय्यासु जनेषु सुखसुप्तेषु गत्वा रुधिरं पीत्वा पुनश्चास्यामप्रमादायां शय्यायां राज्ञः प्रतिवसामि। प्रस्तरोपनयनकाले शय्याया अधोदेशं प्रविशामि। पुनः प्रस्तरे प्रसारिते शयनतलमारुह्य सुखं प्रतिवसामि। कदाचिदप्यत्र दूष्यं मया नाचरितम्। त्वयाहमिव वर्तसे यदि सुखं निवसेति। एवं श्रुत्वा मत्कुणस्तथा करोमीत्यब्रवीत्। ततो यूकः प्राह बहून्यत्र दुर्निमित्तान्यालक्ष्य — वयस्य! पश्यास्मद्विनाशशंसीनि निमित्तानि। चपलस्त्वं प्रसुप्ते राजनि अनार्यमाचरिष्यसीति शङ्के। करोषि यदि कर्कटकाद् बकस्येव विनाशो भविष्यतीति। स मत्कुणस्तं पप्रच्छ— कथं कर्कटकाद् बकस्य विनाश उपगत इति। यूकोऽब्रवीत्।

कश्चित् बकः कस्मिंश्चित् तटाककूले वसति स्म। तस्मिन्नगाधे तटाके मत्स्यादानं कर्तुमशक्तः प्रत्युत्पन्नमतिर्वकहृदयस्तटाकाभ्याशे उपविश्य भृशं रोदिति स्म। रुदन्तं दृष्ट्वा मत्स्याः किं रोदिषीति पर्यपृच्छन्। स बकस्तान् दृष्ट्वा मत्स्यादीन् भवतां विनाशः प्रत्यासन्न इति विचिन्त्य रुदामीति। ते मत्स्याः कथमस्माकं विनाश इति पृच्छन्ति स्म। स बकः प्रत्युवाच। इत आरभ्य त्रीन् वत्सराननावृष्टिरस्तीत्याश्रमवासिनो मुनयः कथयन्ति स्म। तदाश्रमवासिनो मे शकुनयः कथयन्ति स्म। ततः स्वल्पजलवासिनो मृगाः पक्षिणश्चेमं परित्यज्याक्षयजलानि सरांसि नदीश्च प्रतिपद्यन्ते। अहमप्येतत्तटाकमहीरुहवासी बक इत्यवगन्तव्यः। ममापि जिगमिषोर्जलसञ्चरणोचितान् युष्मानालोच्यैतस्मिन् सरसि शुष्के कथं जीविष्यन्तीति कृपा सञ्जातेति। तद्वार्तां श्रुत्वा मत्स्या विषण्णमनसः प्रोचुः। आर्य! तर्हि सञ्जातमृत्यवो वयं त्वच्चरणशरणमात्रैकप्रतिक्रिया जाताः। अस्ति यदि स्नेहोऽद्यैवास्मत्परित्राणोपायश्चिन्त्यतामिति। बकः प्राह — नातिदूरे मुनीनामाश्रमपदम्। तदनुभावादेव तत्र निवसन्तो हिंस्रजातिसंभूता अपि मृगाः पक्षिणश्च स्वपरदेहयोरभेददर्शिनः प्रतिवसन्ति स्म। विशेषतोऽहं शिखण्डी भूत्वा पद्मकिञ्जल्कशैवालादिभिः कृतात्मधारणस्तपश्चर्यया कालं गमयामि। सोऽहमनुदिनं यथाशक्ति युष्मासु कांश्चिदुपादायोत्तरदिग्भागे नित्यजलप्रवाहपूरितायां महानद्यां प्रवेशयामीति। युष्मभ्यं रोचते यदि यूयं सर्वे सम्भूय मन्त्रयित्वा मह्यं कथयतेत्युक्त्वा क्वापि गतः। ततः सर्वे मत्स्याः सम्भूय मन्त्रयामासुः। तेष्वेकोऽब्रवीत् — बकास्तावज्जातिधर्मत एवास्मान् भक्षयित्वा जीवन्ति स्म। तत् कथमत्र विश्वास इति। अन्योऽब्रवीत् — बकजातिस्तावदविश्वसनीयैव। असावाश्रमवासी शिखण्डी भूत्वा तपश्चरित्वा सर्वप्राणिषु सम्प्रीत्या वर्तते। तद् विश्वसनीय इति। परोऽब्रवीत् — मनुष्या अपि श्रेयोविवेकार्हबुद्धयो बध्यान् प्रति मिथ्यावादिनो भवन्ति। कथं तिरश्चां वचनं श्रद्धेयमिति। अन्योऽब्रवीत् — अविषयत्वाधिकविनाशभयात् सद्यो विनाशं नानुपश्यन्ते बुद्धिमन्त इति। ततः पङ्कसद्मो नाम मत्स्योऽब्रवीत् —

अहं तु पुनर्मद्गुपुत्रः । पुत्रास्तु सुकुमाराः सुदर्शनीयाश्च । अस्मिन् सरसि क्षीणजले लुठतः काकगृध्रादिभिर्भक्ष्यमाणान् द्रष्टुं नोत्सहे । असौ कदाचित् प्रत्यागमिष्यति चेत् यथाहं तां नदीं तेन दर्शितवान् पुनः प्रविष्टो भवामि, स तथा करोति चेद् विश्वसनीयः । अन्यथा मद्ना-गमनादभक्षितं मामवगच्छत । उभयथा पुत्रविनाशदर्शी न भवि-ष्यामीति । गते तस्मिन् दिवसे बकः प्रातरेवाभ्ययात् । तं दृष्ट्वा मत्स्या हर्षनिर्भरमनस इतस्तत उपप्लुतैः शिरोभिः प्रणामं कुर्वन्त इव बहुविधाचारं कृत्वा यथाभिप्रायं प्रशशंसुः । ततः पङ्कसङ्गोऽब्रवीत्— मामादाय गत्वा नदीं दर्शयित्वा पुनरेतत् तटाकं प्रापयेति । स तथेत्युक्त्वा तुण्डाभ्यां तमादाय विहायसा निर्गच्छन्नेवमचिन्तयत् । अमुं भक्षयिष्यामि यदि एतत्मात्रमात्रं फलं प्रायशो भवेत् । तेन महानदीं दर्शयित्वा प्रत्यागमय्य मत्स्यान् विश्वास्य पुनरेकैकं भक्षयिष्यामीति निश्चित्य नद्यां विससर्ज । स ततो दिवसेऽतीते नद्यास्तीर्थैकदेशे सङ्केतभूमिमुपसृत्य स्थितः । स मत्स्यः स्वादु स्वो-चितमाहारं भक्षयित्वा सन्तुष्टहृदयः सङ्केतदेशे स्थितं बकं प्रसृत्य प्रोवाच— भवतः सत्यवादितामस्मदीयेभ्यो निवेद्य त्वत्तुण्डसंस्पर्श-मात्रेण पवित्रीकृतेनामुना मदीयेन गात्रेण पुत्रान् परिष्वज्य विगत-किल्बिषान् कृत्वा भवदनुग्रहफलमेतैः सह महानद्यामनुभवेयमिति । बकस्तथेति तुण्डाभ्यां समादाय गत्वा तटाकं प्रवेशयामास । मत्स्यस्तेभ्यो यथावृत्तं निवेदयति स्म । तस्मिन् दिवसेऽतीते प्रात-रेव बकः प्रायात् । तस्मिन्नागते मां नय मां नयेत्यहमहमिकया प्रवर्त-यन्ति स्म । बकः प्राह— पूर्वं तव भ्रातॄन् सुतांश्च नीत्वा पश्चादन्यान् नयिष्यामीति पङ्कसङ्गं प्रति शपथः कृतः, इत्युक्त्वा पङ्कसङ्गपुत्रे-ष्वेकमादाय गत्वार्धपथे शिलातलं दृष्ट्वा तत्रैवावतीर्याभक्षयत् । एवं प्रतिदिनमेकैकमादाय भक्षयतो गच्छति कालः । तत्रत्यः कश्चित् कुलीरो नाम कर्कटकः बकमागत्याब्रवीत् — अहमपि भवदीय एव । मामपि भवान् नेतुमर्हतीति । ततो बकस्तमपि ग्रीवामारोप्याकाशं गत्वा मत्स्यभक्षणात् सञ्जातमत्स्यरसः परितृप्तः, इदानीं कर्कटक-मांसरसास्वादनकुतूहलः शिलातले निक्षेप्तुमारब्धः । ततः कर्कटकः

किमनेन व्यवसितमिदं न शोभनं भविष्यति । अत्र शिलातले मत्स्या-स्थीन्यार्द्राणि शुष्काणि च सर्वाण्येव सर्वतो दृश्यन्ते । प्रायः पापेना-मुना मत्स्या विप्रलभ्या भक्षिताः । भवत्वेवं करिष्यामीति नि-श्चित्य पादशृङ्गाभ्यां ग्रीवां निष्पीड्य विगतसत्त्वमकरोत् । तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

न जानन्ति न जानन्तीत्यन्यान् यः परिबाधते ।
स नाशं स्वयमाप्नोति बकः कर्कटकाद् यथा ॥ ११ ॥

एवमुक्त्वा यूको वासमदात् । अथ रजन्यां तस्यां शय्यायां राजा सुष्वाप । मत्कुणो राजानं दृष्ट्वा अद्य सर्वरुधिराणि मया पीतानि । सम्प्रति राजरुधिरस्य रसविशेषं ज्ञास्यामीति सञ्चिन्त्य राज्ञः सुवर्ण-कदलीस्तम्भसदृशमूरुं ददंश । ततो राजा प्रबुद्धः शय्यामन्यामारुह्य शयनपालानाहूयास्मिञ्छयने मत्कुणो मामदंशयत् । तदनुदृश्यतामि-त्यादिदेश । ततो राज्ञो वचनं श्रुत्वा मत्कुणः सत्वरं पार्श्वगतायाः भित्तेर्विवरं प्राविशत् । ततः शयनपालका दीपिकामादायानुदृश्य यूकं दृष्ट्वा कथमत्र सम्भव इति राज्ञे दर्शयित्वा नखद्वयेन निष्पीड्य तं ससीत्कारममारयन् । तं दृष्ट्वा वसुभागः श्लोकमवोचत्—

शीलवृत्तमविज्ञाय यो ददाति प्रतिश्रयम् ।
सोऽचिरान्नश्यति यथा यूको मत्कुणकादिव ॥ १२ ॥

इति । भवन्तं मत्यर्थंवदीदर्शी कथामकथयद् राजास्माकम् । तस्मात् प्रमादिना न भवितव्यं भवतेत्यभिधाय शम्बरः स्वस्वामिनमेकाकिन-मुपागमत् । ततस्तं विनयेनोपगतं चण्डपिङ्गलः क गत्वा चिरा-दागतो भवानित्यब्रवीत् । ततः शम्बरो यद्यवसरो दीयते, कथया-मीत्याह । कस्त्वां निरुणद्धि, कथ्यतामित्याह राजा । शम्बरोऽब्रवीत् । भवन्तमनुव्रजन्तं मां नन्दकः संज्ञया समाहूय पुरावृत्तमेकमाख्यान-मकथयत् । ततश्चण्डपिङ्गलेन किं तदित्युक्तः शम्बरः कथयितु-मारब्धः—

कश्चित् किल सार्थात् परिभ्रष्टो विकटो नामोष्ट्रो महत्यरण्य-न्तरे नगाग्रजातान्यभिनवानि पल्लवानि भक्षयित्वा सरसि पानीयं

पीत्वा परितृप्तश्चरन् सिंहशार्दूलद्विपजम्बुकादिभिः सख्यमकरोत् । एवं सिंहादिभिर्निरन्तरप्रवृत्तसौहार्दस्य विकटनाम्न उष्ट्रस्य गच्छति काले कदाचिन्मत्तमातङ्गमस्तकविन्यस्तभग्नपादनखरस्य सुखसञ्चाराशक्तस्य गुहागतस्य सिंहस्य सिद्धार्थको नाम जम्बुकश्चिन्तको नाम काकश्च सचिवौ स्याताम् । ततः सिद्धार्थकः प्रोवाच सर्वेष्वनुजीविष्वासीनेषु—विकट! त्वं कृशोऽसि, श्रान्तोऽसि, किमुपचरितुं न प्रयासीति । एवमुक्तो विकटः प्राह—स्वामिन्यस्वस्थे ममाहारोऽपि न रोचत इति । तच्छ्रुत्वा मृगपतिराह—नैवं कर्तुमिहार्हसि । मद्वचनाद् व्रज चरितुमिति पुनः पुनरब्रवीत् । एवं मृगपतिना निर्बध्योक्तो विकटश्चरितुं निरगच्छत् । तस्मिन् निर्गते सर्व एव प्राञ्जलयो भूत्वा विज्ञापयन्ति स्म—स्वामिन्! सर्वमिदं वनमस्माभिरन्वेषितमामिषार्थम् । न कश्चित् क्षुद्रमृगोऽप्यस्माभिरासादितः । किमिदानीं कर्तव्यमिति । विषण्णैरेवमभिहिते चिन्तको नाम काकसचिवो सिंहस्य नीतिसारमिमं श्लोकमब्रवीत्—

> कर्मणा येन केनापि मृदुना दारुणेन वा ।
> उद्धरेद् दीनमात्मानं पश्चाद् धर्मं समाचरेत् ॥ १३ ॥

इति । ततः सिद्धार्थको नाम सचिवः कमर्थिकृत्यैवमभिहितमिति पर्यपृच्छत् । ततश्चिन्तकः सर्वसत्त्वान् निरीक्ष्याब्रवीत्—तृणभक्षैः श्वापदानां कः सम्बन्धः । तत् साधु विकटं मारयित्वा तस्य मांसरुधिरैराप्यायितः परितृप्तो भवतु राजा । वयं चर्मास्थीनि भक्षयित्वा क्षुत्प्रशमनं करिष्याम इति । तच्छ्रुत्वा सिद्धार्थकः प्राह—तस्य पराक्रमं सम्बन्धिनां च वृत्तान्तं ज्ञात्वोद्वृत्त इव प्रलपसि । शृणु मूर्ख! पुरावृत्तमाख्यानमिति कथयितुमारब्धः ।

झषमकरनक्रतिमितिमिङ्गिलाद्यनेकग्राहसङ्कुलस्य पवनबललोलमहोर्मिमालाकुलस्य कुम्भयोनिपानभीत्येवानवरतप्रवृत्तगम्भीराम्भोधिध्वनिबधिरदिक्चक्रवालस्य महोदधेर्वेलायां किञ्चन टिट्टिभमिथुनं प्रतिवसति स्म । अथ टिट्टिभी प्रियंवदानामात्मनः प्रसवसमयमालक्ष्य स्वभर्तारमुत्तानपादं पप्रच्छ—आर्य! कस्मिन् देशे मया प्रसवित-

व्यमिति । ततो भर्ताब्रवीत् —निर्मलस्फटिकशिलापूर्णश्लक्ष्णवालुकेऽस्मिन् सैकतमण्डले तरुणपल्लवपर्यङ्कितायां मनोहरशय्यायां प्रसवितुमर्हसीति । तच्छ्रुत्वा प्रियंवदाब्रवीत् —नन्विह वेलायां बह्वीवीचितो महाभयमस्तीति । उत्तानपाद ईषद् विहस्य सभ्रूभङ्गमब्रवीत् —ममापत्यविशेषमपि क्षुद्रसमुद्रवीचयो नापहरन्तीति मूढे ! न भेतव्यमिति ! तच्छ्रुत्वा प्रियंवदा तथाहि सर्वासां नारीणां भर्तृवाक्यमेव प्रमाणमित्युक्त्वा तत्र प्रसूताभवत् । ततष्टिट्टिभ्यां चरितुं गतायामुत्तानपादः पुत्रपरिपालनं करोति स्म । कदाचिदुत्तानपादे चरितुं गते प्रियंवदायामात्मजान् परिपालयन्त्यां समुद्रो ज्ञातवृत्तान्तः अहो ! तिर्यग्योनिगतानां दर्प इति सविस्मयस्तदभिप्रायं जिज्ञासुर्निशाकरकरनिकरोर्मिकरान् प्रसार्य टिट्टिभीपुत्रानग्रसीत् । ततः प्रियंवदा पुत्रविरहिता अतिकरुणं विलपन्ती समुद्रेणापहृतानात्मजान् भर्तुर्निवेदयित्वा मूर्च्छिता भूमौ न्यपतत् । तच्छ्रुत्वोत्तानपादोऽब्रवीत् —शृणु भद्रे ! समुद्रेण हृतांस्तनात्मजानचिरेण यदि नानयिष्यामि, निषादकृतं पापं यत् तदुपैमीति । तच्छ्रुत्वा प्रियंवदा निषादकृतं पापं कीदृशमिति पृच्छति स्म । उत्तानपादः श्रूयतामिति कथयितुमारब्धः ॥

अस्ति शम्बरविषये कश्चित् सर्वभूतनिर्दयः पापको नाम निषादः । स कदाचिन्मृगयार्थमरण्यमनुप्रविष्टस्तत्रासौ सुकुमाराङ्गामिषार्थमरण्यं पर्यटन्तं व्याघ्रमाससाद । तं व्याघ्रं दृष्ट्वा सरभसं परिधावन् कञ्चिद् वटवृक्षमाससाद । ततस्तमुद्विग्नमारोहन्तं वटवृक्षगता वानरी न भेतव्यं न भेतव्यमित्युक्त्वा तस्य निषादस्य हस्तौ गृहीत्वा वृक्षमारोहयत् । ततश्च गर्जन् व्याघ्रो वटवृक्षस्याधस्तादितस्ततः परिभ्रमति स्म । स पापकः क्षुत्पिपासाभिभूतस्तदनुज्ञया तस्याः प्लवङ्गमाङ्गनाया अङ्के सुष्वाप । ततो व्याघ्रः शयितं तमुपलक्ष्य भेदवादस्यायमवसर इति मत्वा वानरीमवोचत् —वरानने ! वनवासिन्यास्तव ग्राम्यगमकृतेन किं प्रयोजनम् । एतत् साधुवचनं गीयताम् । मामैनं देहि । त्वयोपकृतं संस्मृत्य प्रत्युपकर्तुं प्रयतिष्यामि । प्रायेण मनुष्या एव कठिना न मृगा इति लोकवादः

श्रूयते । यदि मद्वचनं पथ्यमिति मन्यसे, त्वयैतत् पुरावृत्तमाख्यानं श्रूयतामिति कथयितुमारब्धः ॥

अस्ति वेण्णाकटकं नाम नगरम् अनवरतममृतनिवहं वहन्त्या वेण्णया महानद्योपशोभितं दुर्भिक्षरोगतस्करवर्ज्यम् । तत्र कश्चिद् यज्ञस्वामी नाम ब्राह्मणः प्रतिवसति स्म । स कदाचिद् तीर्थयात्रानिमित्तं प्रायात् । ततोऽध्वगमनपरिश्रान्तः क्षुत्पिपासाभिभूतस्तृणच्छन्नं कञ्चित् कूपमाससाद । आसाद्य दृढामेकां वल्लीं गृहीत्वा तां कुण्डिकाग्रीवायां समर्प्य जलादानाय कूपे व्यालम्बयत् । तत्र पूर्वपतिता नरवानरव्याघ्रसर्पा बभूवुः । तेषु वानरो वल्लीमालम्बितां दृष्ट्वा हस्तपादाभ्यां गृहीत्वा लघुचेष्टः स्थलमारुह्य तं ब्रवीति स्म । भवत्प्रसादादहं न मृतः । मधुराधिपतेरुद्यानमहं प्रतिवसामि । तत्र यद्यागमनं भवतो भवेद्, अहं शुश्रूषां कर्तुं समर्थः । पुनरप्यस्मिन् कूपे व्याघ्रसर्पमनुष्याः सन्ति । तेषु व्याघ्रसर्पौ कूपादपनेतव्यौ । मनुष्यो नापनेतव्य इत्युक्त्वा प्रतिगतो वानरः । ततो ब्राह्मणः सर्पव्याघ्रौ कूपादपनीतवान् । तावाहतुः—मनुष्यो नापनेतव्यः । आवां भवता आपत्काले स्मर्तव्यावित्युक्त्वा गच्छतः । ततो ब्राह्मणस्तेषां वचनमनादृत्य कृपया मनुष्यमप्यपनीतवान् । सोऽपि नमस्कृत्याह—माधुरोऽहं जात्या सुवर्णकारः । नाम्ना निपुणकोऽस्मि । तत्रागम्यते यदि भवता मम दास्यं द्रष्टव्यमित्यभिधाय प्रायात् । ततो ब्राह्मणस्तीर्थान्यवगाह्य निवर्तमानो मधुरामाससाद । आसाद्य चाध्वगमनपरिश्रान्तो नानातरुषण्डमण्डितमतिशिशिरवारिनीरजराजिविराजितदीर्घिकालङ्कृतमुपवनं प्रविश्य तत्रोज्ज्वलाधिक्षाकलापिनीमलिकुलपरित्यक्तामिव चलत्किसलयवतीमशोकयष्टिमुपगम्य विश्रान्तो बभूव । ततस्तेन ब्राह्मणेन कूपादपनीतः कृतज्ञो वानरस्तं दृष्ट्वा अमृतरसोपमानि फलान्यादाय पर्णैः परिवेष्ट्योपनीय ममैतावानेव विभव इति फलानि प्रदाय तदभिमुख एवास्ते। ब्राह्मणस्तानि फलान्युपयुज्य गतक्लमो भूत्वा गच्छामीत्युक्त्वा निरगात् । वानरस्तमनुगत्यानुज्ञातः प्रतिनिवृत्तः । ततो ब्राह्मणः श्मशानाभ्यासे कोष्ठमाससाद । तत्र च मांसान्वेषणाय परिभ्रमन्तं शार्दूलं

दृष्ट्वा प्रधावितुमारब्धः । ततो व्याघ्रः परिधावन्तं ब्राह्मणं दृष्ट्वा, क्षुधा परिपीडितस्य मे मनुष्यः स्वयमेवामिषार्थमुपगत इति सत्वरमुपसृत्य सञ्जातमत्यभिज्ञो भो भो अस्मत्प्राणद ! न भेतव्यं न भेतव्यम् । यस्त्वयाभिरक्षितः कृपया, तं मां विद्धि । भगवंस्तव पाणिस्पर्शमात्रेण पवित्रीकर्तव्योऽहमित्यभिधाय नमस्कृत्याग्रतः स्थितः । ब्राह्मणोऽपि, निर्भयो भूत्वा परमया मैत्र्या शिरसि पस्पर्श । ततो व्याघ्रोऽब्रवीत्—भगवन् ! अस्मिन् वनगहने नातिदूरेऽस्मद्गुहा । तत्र गन्तव्यमित्यभिधायाग्रतो गच्छति स्म । ब्राह्मणस्तमन्वसरत् । ततो गुहासमीपे खनितान्याभरणानि दर्शयित्वा कश्चित् पुरुषो मृगयाव्यापृतो जघिनाश्वेन परिभ्रमन् गुहासमीपे मया निहत्य भक्षितः । तस्येमान्याभरणानि । यदि मय्यनुग्रहस्तत् स्वीकर्तव्यानीत्यब्रवीत् । ब्राह्मणस्तान्याभरणानि उत्तरीये बद्ध्वा तमाशीर्भिर्वर्धयित्वा निरगच्छत् । व्याघ्रस्तमनुसृत्याभ्यनुज्ञातः प्रतिनिवृत्तः । ब्राह्मणोऽपि नगरं प्रविश्यास्यां नगर्यां मम परममित्रं कश्चित् स्वर्णकारो निपुणको नाम प्रतिवसति । इमानि केवलं निष्करूपाणि कारयित्वा सुखं जीविष्यामीति स्वर्णकारश्रेणिं गत्वा निपुणकगृहं केति पर्यपृच्छत् । तेनादिष्टं, तस्य गृहं दृष्ट्वा प्राविशत् । ततो निपुणकः प्रविशन्तं दृष्ट्वा सञ्जातप्रत्यभिज्ञः सन् अतिचपला निर्व्रीडा ब्राह्मणजातिः, किञ्चिदभ्यवहारादिकं मामपेक्ष्यागतः, तदजानन्निव तूष्णीमासितव्यमित्यास्ते । ततोऽयं ब्राह्मणः स्वयमेव गत्वा सन्निवृत्तः । पुनः स्थित्वा विचिन्त्य महता कालेन मामयं विस्मरतीति तदासन्नवर्ती भूत्वा तद्वृत्तान्तमवगमय्य यथान्यामवयोध्यैतान्याभरणानि दर्शयिष्यामीति सञ्चिन्त्य, समुपगम्य पुनः समाहूय पार्श्ववर्तिनः सर्वान् गमयित्वा यथावदभिधाय तान्याभरणानि दर्शितवान् । एषु यदिच्छसि तदेकं गृह्यताम् । शेषाणि मह्यं विक्रीयन्तामित्युक्तवान् । सोऽपि तानि दृष्ट्वा कुटिलहृदयस्तत्क्षणमुपलब्धप्रत्यभिज्ञ इव तं प्रणम्य विष्टरमुपानीय पादप्रक्षालनं कृत्वा व्यजनेन वीजयित्वा ताम्बूलादिकं दत्त्वा कुत इमानि लब्धानीति पर्यपृच्छत् । ततो ब्राह्मणो यथावृत्तान्तमभिहितवान् । स पापस्तान्याभरणानि सावधानं निरीक्ष्य अहो ! कष्टं मया

मदीयैः सहेमान्याभरणानि मदीयराजकुमारकनीयसा कृतानि । स तावन्मृगयाव्यापृतो वनगहनं प्रविष्टो नाद्यापि प्रतिनिवृत्तः । तदन्वेषणाय प्रहितैर्वनचरपुलिन्दादिभिर्न दृष्ट्वा प्रतिनिवृत्तम् । न ज्ञायते क्व गत इति । एष्वेकस्मिन्नपि दृष्टे मयि दोषमारोपयिष्यति । तदेनमेव राज्ञे दर्शयित्वास्मत्कुटुम्बपरिरक्षणमेव धर्म इति सञ्चिन्त्य दधिघृतगुडादिभिः सह तण्डुलान् ब्राह्मणगृहे पाकाय प्रदाय तैलाभ्यङ्गं कारयित्वा सुश्लक्ष्णमामलकपिण्डं दत्त्वा स्नात्वागन्तव्यमिति तटाकमुपानयत् । तस्मिन् गते पापकस्तान्याभरणानि तदुत्तरीये पिनद्धान्यादाय गत्वा राज्ञे दर्शयित्वा सर्वमकथयत् । ततो राजा नूनमनेन पापीयसा मे पुत्रो हत इति सञ्चिन्त्य हन्यतामयं दुरात्मा मत्कुमारहा इति घातकानादिदेश । ते ब्राह्मणं बद्ध्वा राजमार्गे राजकुमारघाती पापोऽयं ब्राह्मण इत्युद्घोष्य वध्यस्थानाभिमुखा निरगच्छन् । ततो ब्राह्मणो रक्तकरवीरमालाधरो रक्तेष्टकाचूर्णलिप्ताङ्गः श्वपाकैर्नीयमानो ।नरव्याघ्रसर्पवचनमनुसरन् उद्यानसमीपे श्लोकमिमं पठन् जगाम—

> व्याघ्रवानरसर्पाणां यन्मया न कृतं वचः ।
> तेन कृपापनीतेन मनुष्येणास्मि वञ्चितः ॥ १४ ॥

इति । तस्मिन्नुद्याने दन्दशूको नाम सर्पो वल्मीकाद् यात्रार्थं जिगमिषुरुद्ग्रीवः परितो विलोकयन्निमं श्लोकं श्रुत्वा पादपमारुह्य ब्राह्मणमपश्यत् । अहो मे प्राणदायी ब्राह्मणः कष्टामिमां दशां प्राप्तः । धिग् , यस्तदात्मना परिरक्षितः स किलापदोऽस्य हेतुः । अहमपि जीवितनिरपेक्ष एतान् घातकान् यथाशक्ति दष्ट्वा प्राणान् परित्यज्यास्य प्राणदो भविष्यामीति विचिन्त्य वृक्षाग्रादवततार । ततोऽवसीर्ये स्थितो बहुधा चिन्तयामास । अविचार्य प्रयुक्तो दुर्नयो निष्फल एव । दष्टेष्वेतेषु कतिषु पुनरप्यन्ये बहवः सन्ति घातकाः । मय्यप्येतैर्हते ब्राह्मणस्य हननं सम्पद्यत एव । तदा मत्प्राणमात्रफल एव प्रयासः स्यात् । न शरीरत्यागमात्रेण प्रत्युपकर्ता भविष्यामि । तस्मादहं गत्वा राजदारिकां पादे दशामीति मत्वा द्रुततरं गत्वा राजगृहं प्रविश्य गृहोद्याने सखीभिः सह पुष्पाणि विचिन्वत्या राजदारिकायाः पादाङ्गुष्ठे ददंश । ततः सा मूर्च्छिता न्यपतत् । ततो

घषस्पाः सोरस्ताडनाः पादे निपत्यार्ताः कुरर्य इव विक्रोशन्त्यो राज्ञे
ध्यजिज्ञपन् । ततो राजा सम्भ्रान्तः सत्वरमुपसृत्य परिष्वज्य स्वय-
मेव गृहीत्वा गृहमानीय विषवैद्यानाहूय (चि ?)चिकित्सन्तु भवन्त
इत्युक्तवान् । तेषु प्रधानविषवैद्यः पश्य राजन् ! निरतिशयप्रभावां वि-
द्यामित्युक्त्वा नागदूत्या विद्यया तत्रत्यान् नागानाहूयैतेषु इमां द-
ष्टवान् यः स तावत् तिष्ठतु अन्ये गच्छन्तु इत्युक्ते विद्याबलात् तस्थौ ।
इतरे निर्जग्मुः । ततो दष्टनागस्य शक्तिं राजकुमारिका(या)मावेश्य
किमर्थमियं दष्टेति पप्रच्छ । ततो नागशक्त्याविष्टा राजदारिका नाग-
भावे ब्रवीति स्म । केचिन्मनुष्यवानरव्याघ्राश्चाहमपि प्रमादेन महा-
टव्यां कूपे निपतिताः । कश्चिद् ब्राह्मणः पिपासयागत्यास्मान् दृष्ट्वा
दयालुरुदहरत् । स पापको मनुष्याधमः किलास्य प्राणदायिनो
मरणहेतुरिति तमुदन्तममुष्मै निवेदयितुमेनां दष्टवानस्मि । स ताव-
न्मिथ्या राजकुमारं हतवानिति घातकैर्वध्यस्थानं नीयते । नायं राज-
कुमारहा । यद्यसौ नागस्य विषमश्नेष्यति ध्रुवमियं जीविष्यत्येवेति ।
ततो राजा निरपकारव्यापा(र ?)द्विगुणदुःखितस्तं द्रुततरमानयेति
पार्श्वस्थानादिदेश । ततस्तैरानीतं ब्राह्मणं दृष्ट्वा कृताञ्जलिपुटो राजा
क्षन्तव्योऽयं भवता महानपराधः, प्रसन्नो भव, इमां मे दारिकां
जीवय, ते राज्यार्धं दास्यामीत्युक्तवान् । ततः सर्पो ब्राह्मणपादपार्श्वे
निपत्यात्मानं निवेद्य यथावृत्तं कथयित्वाह — भगवन् ! पाणिस्पर्श-
मात्रेणेयं निर्विषा भविष्यतीत्यकथयत् । सोऽप्यविज्ञातविषहरणवि-
धोऽपि तत्प्रत्ययात् कन्यकां पस्पर्श । सा च निर्विषाभवत् । ततस्तु-
ष्टेन राज्ञास्मै राज्यार्धं दत्तम् । ततो राजा स्वर्णकारमाहूय चर्मयष्टि-
प्रहारादिभिर्बहुधा पीडां कृत्वा सत्यं वदेति पृच्छति स्म । स च य-
थावत् सर्वमकथयत् । ततो राजा ब्राह्मणं पप्रच्छ । भगवन् ! कुत
इमान्याभरणानि लब्धानि । ब्राह्मणोऽब्रवीत् । सम्प्रत्येनं व्याघ्रमा-
नीयेमं समर्थयामीति वनं प्रविश्य व्याघ्रमाहूय राज्ञे दर्शयित्वा प्रष्ट-
व्योऽयमित्युक्तवान् । ततो राज्ञा पृष्टः सर्वमकथयत् — कश्चित् कु-
मारो मृगयाव्यापृतो जविनाश्वेन परिभ्रमन् मम गुहासमीपमागतो
निहतो मया भक्षितः । तस्येमान्याभरणानि । नास्माकं मण्यादाना-

ममीभिः प्रयोजनम् । असौ तावत् प्राणद इत्यमुष्मै दत्तानीति । ततो राजा पुनः सर्वमेतदुपपन्नमित्यभिधाय स्वपुत्रवार्तापरितप्तहृदयो बहुविधमपि सकरुणमालप्य, नास्यापराधः क्रव्यादानामयं वृत्तिधर्म इति व्याघ्रं विसृज्य पुत्रस्य परलोकार्थं कर्म कारयित्वा सुवर्णकारमाहूय क्षणमपि पापोऽयं निरीक्षितुं नार्हतीत्युक्त्वा शूलमारोहयत् । ब्राह्मणोऽपि लब्धार्धराज्योऽग्निष्टोमादीन् कृत्वा मधुरायामहरहरिमं श्लोकमुदाहरति —

> मानुषेषु कृतं नास्ति तिर्यक्ष्वेव कृतं वरम् ।
> व्याघ्रवानरसर्पाणां कृतमेव स्मराम्यहम् ॥

इति । एतत् सर्वं दृष्ट्वा वसुभागः श्लोकमवोचत् —

> नराः कृतघ्नाः पापिष्ठा न मृगा न च पन्नगाः ।
> नरेण दूषितो विप्रो भोगिना परिमोचितः ॥

तस्मान्मानुषेषु कृतं नास्तीति मह्यमेनं देहीत्यवोचच्छार्दूलः । ततो वानरी ब्रवीति स्म — अयुक्तमेतद् भवताभिहितम् । ननु सर्वथा शरणागतो रक्षितव्य इति सम्प्रवादः । पुनश्च विदितं मया व्याघ्रेण सङ्गतिर्नास्तीति । ततो व्याघ्रो रुष्टो जगाद । कथं व्याघ्रेण सङ्गतिर्नास्तीति । अथ वानरी प्रावोचत् — मूर्ख ! श्रूयतां पुरातनमिदमाख्यानमिति कथयितुमारब्धा वानरी ।

कश्चित् किल वैद्यः शास्त्राभ्यासं कृत्वा निवर्तमानो महत्यटव्यन्तरे नानाश्वापदमृगसेविते सर्पदष्टं निश्चेष्टं (वानरं ? व्याघ्रं) दृष्ट्वा शास्त्रज्ञानेन विषदष्टमनुगतप्राणं च विज्ञाय रहसि विद्यासामर्थ्यं ज्ञातुकामः पुनश्च नवं ज्ञानं परीक्षितव्यमिति निश्चित्य गुरूपदिष्टेन मार्गेण विषहरणविधिं प्रयुज्य व्याघ्रं चिकित्सति स्म । ततो विद्याप्रभावेन विजृम्भमाणो व्याघ्रः समुत्थाय क्षुधाभिभूतः पार्श्वस्थं वैद्यमवलोक्य ग्रीवायामुत्प्लुत्य गृहीत्वा यथासुखमभक्षयत् । तं दृष्ट्वा जातिस्मरः कश्चिद् वानरः श्लोकमवोचत् —

> नवं ज्ञानं नवं वित्तं नवैश्वर्यं च यौवनम् ।
> पण्डितानपि बाधन्ते किं पुनस्तानपण्डितान् ॥

तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

> कृतघ्ने विहितं कार्यं कर्तारमपि पीडयेत् ।
> नाशयत्यधमो वैद्यं व्याघ्रः स्वं जीवकं यथा ॥

तद्वत् त्वय्युपकृतमेव नास्तीति वदन्त्यां वानर्यां निषादः प्रतिबुद्धः । सा च वानरी निषादस्याङ्के सुष्वाप । अथ व्याघ्रानुचरो जम्बुकः व्याघ्रमुपगम्य पादपमूलमनुभवन् वृथा किमत्रोपविष्टवानित्यब्रवीत् । ततो व्याघ्रो मत्सख्या वानर्या सहैकयुक्तं कार्यमस्ति । तदवसर-मालोक्यासीनोऽस्मीति प्राह । त्यज वानरीसख्यम् । तद् दोषवद् भवति भवते । एतदिच्छतास्मिन् नियुक्तेन मया हेतुमद् वक्ष्यमाणं वाक्यं भवता बोद्धव्यम् । यथा सूचीमुखी नाम चटकी वानरीस-ख्याद् दोषमाप्तवतीत्यवोचत् । व्याघ्रस्तमवोचत् — सूचीमुख्या वा-नरीसख्याद् दोषः कथं प्राप्त इति । सृगालः प्राह — श्रूयतामिति कथयितुमारब्धः ।

कस्याञ्चिदटव्यां विविधमधुरफलकुसुमकिसलयविटपिवनगु-ल्ममालिकायामतिशयितामृतरससलिलनिवहप्रवाहोपशोभितायां तत्र वटवृक्षस्य महतः शाखाग्रे काचित् सूचीमुखी नाम चटकी प्रतिवसति स्म । तस्मिन्नेव वटवृक्षे वानरी च प्रतिवसति स्म । अथ कदाचिदवि-च्छिन्नजलनिवहनिपतनासारधाराशीकरान्धीकृतसकलदिशि काले शी-तवातेन सङ्कुचितसर्वाङ्गीं वानरीं दृष्ट्वा यथासुखं डोलायमानकुलाये निलीयमाना सूचीमुखी जगाद —

> हस्तवान् पादवांश्चैव मतिमांश्चैव वानर! ।
> शीतवातपरित्राणीं किं कुटीं न करिष्यसि ॥

इति । तच्छ्रुत्वा सकोपं प्राह — अस्माकं तु पूर्वो हनुमत्प्रभृतयो वानराश्च रामचोदिताः परमकार्येषु व्यचरन् । गृहकर्म न चक्रुः । न वयं शिल्पपण्डिता इति ब्रुवन् सहसा वृक्षाग्रे तस्या आलयकुलायं वि-नाशयति स्म । ततः सूचीमुखी दुःखिता पार्श्वनस्थायिनं मित्रमाह — भगवन्! पश्य मूर्खेण वानरेण दुरात्मना तच्छ्रेयोऽभिदधानाया ममालयो विनाशितः । तद्वचनं श्रुत्वा मित्रमवोचत् —

> नानाम्यं नमते काष्ठं न शस्त्रं क्रमतेऽश्मनि ।
> सूचीमुखि! विजानीहि नाशिष्ये हितमुच्यते ॥

नदन् वसुभागः । एवं तव वानरीसख्यं मा भूदिति त्वां याचेऽह-
मित्युक्त्वा सृगालः पुनरप्याह निषादं प्रति । तत्राप्यवहितमेतच्छ्रू-
यतां निषाद ! पुरावृत्तं वानरीसख्यमिति कथयितुमारब्धः ।

अथ कश्चिन्मथुराधिपतिः राजा देव्या सह वसन्तकाले गृ-
होद्यानं प्रविश्य सर्वमेव परिवारं द्वारे स्थापयित्वा सुशिक्षितेन वान-
रेण गृहीतखड्गेन पर्यटंस्तत्रैव रक्तकिसलयतरून् कुसुमितलतालि-
ङ्गितान् दृष्ट्वा विश्रमितुं माधवीमण्डपस्याधः सुरुचिरे स्फटिकशिला-
तले निपद्य कश्चिदप्यागतं वारयेति निर्दिश्य वानरं तया देव्या
सह सुष्वाप । अथ सुप्ते राजनि कश्चिन्मधुकरः विविधकुसुमवत्यां
मालायां पार्थिवस्योपरि निपपात । अथ तं दृष्ट्वा अयं मधुकरः
स्वामिनमभिभवतीति मत्वा ज्ञानाभावात् पार्थिवस्य खड्गमुद्धृत्य त-
स्योपरि प्राहरत् । स च तेन प्रहारेण देव्या सह पञ्चत्वमगमत् । तं
दृष्ट्वा वसुभागः श्लोकमवोचत्—

परमः पण्डितः शत्रुर्न च मित्रमपण्डितः ।
पश्य वानरमूर्खेण राजपुत्रो विनाशितः ॥

किं बहुना भाषितेन, अस्माकं गृहं गत्वा भवत आहारमिदानयामी-
त्युक्त्वा दुष्टजम्बुकः शनैश्शनैरगमत् । अथ व्याघ्रो मनुष्यमब्र-
वीत्—वानरी मह्यं दीयताम् । अहं भवन्तं विमुच्य गच्छामीति । त-
च्छ्रुत्वा वानरीमङ्कगतां कृतघ्नो निषादो भूमौ न्यपातयत् । [illegible]
पतनसमये प्रबुद्धा व्याघ्रपरिगृहीता वानरी व्याघ्रस्य [illegible]
स्याब्रवीत् । किमिति व्याकुलयसि व्याघ्र ! । तव [illegible]
वृत्तिः । प्राणिनां प्राणस्थानं न जानामि ! यदि [illegible]
मे लाङ्गूलाग्रं गृहाण । तत्र मे जीवः । [illegible]
वनोऽपि । तच्छ्रुत्वा व्याघ्रो दुर्मतिर्ग्रीवां [illegible]
मारब्धः । ततो व्याघ्रं वञ्चयित्वा [illegible]
पर्युत्पपात । तं दृष्ट्वा वसुभागः [illegible]—

प्रत्युत्पन्ने [illegible]
स निस्तरति [illegible]

ततो वृक्षगतां वानरीं दृष्ट्वा निषादः सकम्पं बि(भ्य? भे)ति स्म। अतिचकितं निषादं दृष्ट्वा वानरी न भेतव्यं न भेतव्यमिति मस्य-बादीत्। अहमेव विस्मृत्यान्यत्र निरीक्षणात् त्वदङ्कात् परिभ्रष्टा भूमौ निपतितास्मीति। पुनरपि तमेवाश्वास्य गते व्याघ्रे मम निवासं गच्छाव इत्युक्त्वा क्षुत्पिपासाभिभूतं निषादं स्वपृष्ठमारोप्य स्वगृहगुहां प्रविश्य निषादमवरोप्येहास्यतामित्युक्त्वा गृहाभ्यन्तरस्थान् शिशूनाहूय भवतां मातुलेनानेन सह क्रीडमाना यूयमासितुमर्हतेति व्यादिश्य फलान्वेषणाय जगाम। ततो वानरीपुत्राः कुतूहलदर्शना निषादमुपसृत्य पादौ संवाहयन्तन्यः पिटकाच्छिदन्यो यूकानि विचिन्वन् निषादं रमयाम्बभूवुः। अथ निषाद इतस्ततो विलोक्य काष्ठाभ्यामग्निं विमथ्य गुहमसङ्कटं विशमानाञ्छिशूनाहूय एकैकं निर्दयो निषादो ग्रीवायां निष्पीड्य दग्ध्वा प्रभक्ष्य हस्तौ पादाभ्यां प्रमृज्य पूर्वमिव तत्रास्ते। अथ तस्मिन् काले अमृतरसोपमानि कदलीफलादीनि पक्वानि वानरी पर्णैः परिवेष्ट्य समुपागमत्। ततो वानर्यनुमानेन मम पुत्रा अनेन भक्षिता इति ज्ञात्वा किञ्चिदप्यसम्बद्धं नाभिभाष्य मम पुत्राणां फलानि पश्चाद् दास्यामीत्युक्त्वा त्वं यथाकामं भक्षयित्वा स्वगृहं गच्छेति तस्मै तानि फलानि प्रदाय तव निवासं त्वां प्रापयामीति तं स्वपृष्ठमारोप्य गन्तुमारब्धा। स तामारुह्य गच्छन्नात्मनः सुचरितां भूमिमवाप्येदानीं मम निवासं प्राप्तो रिक्तपाणिः कथं प्रविशामीति सञ्चिन्त्य क्षुरिकामुत्क्षिप्य विकोशां कृत्वा तां गतप्राणामकरोत्। तन्मांसं विभज्य कोदण्डस्योभयकोट्यामालम्ब्य स्कन्धमारोप्य गन्तुमारब्धो दूरत एव स्थितं पूर्वदृष्टं व्याघ्रं ददर्श। ततो मांसमुत्सृज्य पलायमानं निषादमालोक्य व्याघ्रोऽब्रवीत्—

मित्रघ्नं समयाद् भ्रष्टं कृतघ्नं बहुकिल्बिषम्।
न भक्षयामि त्वां पाप! गच्छ शीघ्रं ममाग्रतः॥

इत्युक्त्वा व्याघ्रो जगाम। तं दृष्ट्वा वसुभागः श्लोकमयोचत्—

तिर्यग्योनिगतैश्चापि कृतघ्नो नोपभुज्यते।
निषादं पश्य पापिष्ठं व्याघ्रेण परिवर्जितम्॥

ततो धर्मः स्वं रूपं दर्शयित्वा वानरदेहं परित्यज्य अतिसुकुमारनिरूपितप्राप्तदेवतारूपां सुप्रतिष्ठितकूर्मचरणामनुद्धपिण्डिकां सुनिर्मितगूढजानुसन्धिं कदलीस्तम्भसुवृत्तसमनिरन्तरोरुयुगलां विपुलपृथुरुचिरश्रोणीफलकां कन्दर्पाग्निधूमरेखोपममस्तमृदुसूक्ष्मस्निग्धसहितरोमराजिशोभनस्वच्छोदरीं गङ्गावर्तप्रदक्षिणतरङ्गरभसा रविकिरणविराध्यमानकमलगम्भीरविवृतनाभिं (?) करपरिमितमध्यां कनककरण्डकोपमपीनोन्नतकान्तपयोधरां समवृत्तपीवरबाहुं निरन्तररक्तकराङ्गुलीकां प्रवालबिम्बफलाधरोष्ठीं मुक्ताफलरुचिरदन्तामशोकपल्लवाकारतालुजिह्वां शुकलक्षणसमन्विततुङ्गनासां विष्फारितकुवलयवरकमलशवरनयनामचिरोद्गतबालचन्द्ररुचिरललाटिकामनङ्गशरासनरुचिरभ्रुवं कमनीयकर्णिकाशोभितकर्णामसितकुञ्चितदीर्घकेशीं शक्रध्वजमत्स्ययुगलकमलप्रशस्तबहुविधलक्षणधरां कुवलयकुसुमसुगन्धिशतपत्रनिःश्वासगन्धां कलहंसललितचारुगमनां कोकिलमृदुमधुरस्वराम् अप्सरोभिः सितचारुचामरैर्दोधूयमानालकां वानरीं तां स्वपुत्रैः सह स्वर्गमारोहयत् । ततो धर्मं वानरी प्राह — मम भ्रातायं निषादः किं कुर्यादिति । स धर्मस्तां प्रत्यवोचत् — तव च तव पुत्राणां च यावन्ति रोमाणि, तावन्ति वर्षसहस्राणि महारौरवे नरके प्रपच्यते । पश्चान्नरकेष्वेकविंशतिषु क्रमशः कोटिकोटिवर्षाण्यधश्शिराः पच्यते । कुतस्तस्य स्वर्ग इत्युक्त्वा जगाम । इत्येवं पापिष्ठो निषाद इति कथयित्वोत्तानपादः शोकं मा कार्षीः, शोकं मा कार्षीस्त्वमिति भार्यामाश्वास्य जलस्थलचराणां शकुनीनां मम पुत्राः समुद्रेणापहृता इत्याचच(क्षिरे ? क्षे) । तच्छ्रुत्वा सर्व एव पक्षिणः सुपर्णनिलयमगमन् सोऽस्माकं राजेति । ततस्तत्रस्थान् कृतप्राञ्जलीन् पक्षिणो दृष्ट्वा गरुडोऽनेकगरुडैः परिवृतः सिंहासनस्थो भवतां किमागमनप्रयोजनमित्युक्तवान् । ततः सर्व एव पक्षिणोऽस्य टिट्टिभस्य पुत्राः समुद्रेणापहृता इत्यूचुः । तच्छ्रुत्वा गरुडः स्वपरिपा(कार्य ? लाय)करणे स्वामिनो दुर्बलत्वं लोके प्रसिद्धं भवति । पापं च महत् स्यादिति निश्चित्य भगवतो विष्णोः सकाशं गत्वा साष्टाङ्गं प्रणम्य स्वामिन् ! मम भृत्यस्य टिट्टिभस्य पुत्राः समुद्रेणापहृता इति व्याजिज्ञपत् । ततो भगवान् पुण्डरीकनयनस्त्रिलोकनाथश्चराचरगुरुः श्रियं प्रेक्ष्य किञ्चित् प्रहस्य पार्श्वस्थितं सुदर्शनमाज्ञापयत् ।

सुदर्शनो गरुडेन सह निमेषार्धमात्रेण वरुणालयं प्राप्य वरुणस्याख्याय टिट्टिभपुत्रान् मोचयित्वा गरुडाय प्रादात् । गरुडस्तु द्विजकुलेभ्यः, द्विजकुलानि टिट्टिभकुलेभ्यः, टिट्टिभाश्चोत्तानपादाय, उत्तानपादो भार्यायै प्रादात् । तं दृष्ट्वा वसुभागः श्लोकमवोचत्—

शत्रोराक्रान्तिमज्ञात्वा वैरमाचरते तु यः ।
स पराभवमाप्नोति समुद्र इव टिट्टिभात् ॥

तस्मात् तस्याक्रान्तिमज्ञात्वा वैरमनारब्धव्यमिति सिद्धार्थकेनैवमुक्ते चिन्तको नाम व्याड्क्षो ग्रामनगरखेटपत्तनानां गन्ताहमस्माकमाक्रमितुं शक्य एव(स्वा ? सा)र्थपरिभ्रष्टोऽहं एवेति प्राह । सिद्धार्थको जगादाधर्मो भविष्यतीति । चिन्तक आह—यथाधर्मो न भविष्यति, तथा मया तर्कित इति । हरिरब्रवीत् —कथं मित्रघातकस्य पापं न स्यादिति । यथा पापं न भवति, तथा खल्वुपायः मतर्कितोऽस्माभिः सर्वैरित्युक्त्वा वायसः स्वयमेव गत्वा विकटमाहूय तेन सहागत्य स्वामिपार्श्वे निषसाद । अथ पूर्वमन्त्रितोपायेषु काक उत्थाय सर्वानेवेदमब्रवीत् । यदि भवन्तः क्षुधापीडिताः, परममित्रं मां भक्षयन्त्विति श्लोकमुक्तवान्—

यदि क्षुधान्विता यूयं मित्रं मां भक्षयिष्यथ ।
इहलोकसुखं मित्रं न मित्रं पारलौकिकम् ॥

इति लोकवादः श्रूयते । तच्छ्रुत्वा त एवमूचुः—कथं परममित्रं भवन्तं भक्षयामः । यद्यपि सर्वे म्रियामहे, भवन्तं न भक्षयामः । भवतोऽल्पमांसत्वात् क्षुत्पिपासापर्याप्तिरस्माकं न भविष्यति । केवलं मित्रहननमेव फलं स्यादिति । तच्छ्रुत्वा विकटो जम्बुकव्याघ्रकाकानुपचारेण मां भक्षयतेत्युक्तवान् । एवं विकटस्य वाक्यं श्रुत्वान्योन्यमभिसमीक्ष्य तमाप्लुत्य निहत्य हस्तचरणवदनैर्विकटपिशितं यथेष्टं भक्षयामासुः । त दृष्ट्वा वसुभागः श्लोकमवोचत्—

बहवः पण्डिताः क्षुद्राः सर्वे मायोपजीविनः ।
दुर्धुर्दोषमदोषं वा चक्रुः काकादयो यथा ॥

इत्येवं वृषभेण कथितमिति धम्मरो जगाद । अथ चण्डपिङ्गलस्तच्छ्रुत्वा द्विधाभूतहृदयः किं कार्यमुताहोस्विदकार्यमिति चिन्तयन् परिभ्रमति स्म । अथ यदाचिद्धम्मरो वृषभं विनयेनोपगम्य चित्तभेदं करोमीति

वृषभमुपगतवान् । अथ तं दृष्ट्वा नन्दकस्तमुद्वीक्ष्य तत्र राज्ञः को वृत्तान्त इति पप्रच्छ । शम्बरः कथितवान् । स्वामी रुष्टोऽद्यैव तव कश्चिद् दोषमुत्पादयति । कुञ्जरोऽज्ञानाद् बहुविरोधं कृत्वा यथाभूतः, तथैव भविष्यसि । नन्दकः कुञ्जरो बहुविरोधं कृत्वा कथं विनष्ट इति पप्रच्छ । ततः शम्बरः कथयति स्म ।

कस्मिंश्चिन्महारण्ये नानापक्षिसमाकुले मदान्धो हस्ती परिभ्रमन् कस्मिंश्चिद् भूतले निहितान् लट्वासुतान् घातितवान् । ततो लट्वा चरितुं गता प्रत्यागम्य द्विपेन परिमर्दितान् सुतान् दृष्ट्वा मित्रैः परिवृतस्य भर्तुः पादयोः पतिता भृशं रोदिति स्म । अथ तां लट्वामुत्तिष्ठोत्तिष्ठ भद्रे! किमर्थं रोदिषीत्युक्ता लट्वा अहह हस्तिना तवात्मजा मृदिता इत्यवोचत् । तच्छ्रुत्वा भार्यामाश्वास्य विसृज्य बाष्पपर्याकुलेक्षणश्चिरं निःश्वस्य काकद्रुमकुट्टमण्डूकनीलमक्षिकादीनि इद वचनमब्रवीत् — अहो नु खलु पुत्रमरणं श्रुत्वा प्रतिकर्तुमशक्तस्य मे वचनं श्रूयतामिति श्लोकमवोचत् —

> यः पुत्रमरणं श्रुत्वा शोकग्रस्तषडिन्द्रियः ।
> शत्रुष्वशक्तवीर्यस्य तस्याशु मरणं वरम् ॥
>
> श्रेयो नरस्य मरणं भीरोः शत्रुष्वशक्तवीर्यस्य
> किं तस्य जीवितफलं परिभवशोकाभिभूतस्य ।

ततोऽरिष्टनामा काको मित्रं मा शोचेत्युक्त्वा इमं श्लोकमब्रवीत् —

> नातिक्रान्तानि शोचेत प्र(स्थि ? स्तु)तान्यागतानि चिन्त्यानि ।
> शोचन्नतीतमर्थं न च लभते ते नु नैव लभ्यन्ते ॥

इति । ततः पुनरपि शोकापनयनार्थं पुरावृत्तमाख्यानं कथयितुमारब्धः ।

अमराधिपतेर्देवस्य कश्चित् किल पादनिष्णो नाम कुतूहलदर्शनो देवाप्सरोयक्षगन्धर्वकिन्नरकिम्पुरुषमहर्षीणां प्रतिवक्ता शुकपोतो बभूव । प्रथमयौवनोत्तमगुणरूपविलासिनीभिर्हस्तिदन्तप्रमाणविस्तीर्णपृथुरुभिर्नानाविधदिव्यगन्धानुलेपनाभिर्नवकुसुमप्रकीर्णकेशकलापाभिः, रम्भामेनकातिलोत्तमोर्वशीचित्रलेखालम्बालकापुण्डरीकातरुणीसुलक्षणाभामिनीमनोरमासितासुबाहुप्रियासुगन्धासुमालिनी-

कन्यकाकामवरारुन्धतीहेमाकृतिरम्भाभिमलाविश्रुताघृताचीसुकेशी-
मञ्जुघोषाप्रभृतिभिर्नित्यं नवयौवनविशेषजनितकर्कशगुणस्तनाभिः
परमरुचिरवेषविलासिनीभिरुत्पलतनुरक्तांशुकदुकूलपट्टकौशेयान्तरस-
न्दृश्यमाननवमणिमेखलाकलापालङ्कृतपृथुतरसुभगगुरुजघनाभिर्भ्रू-
कटाक्षविक्षेपेण विलासितेन ललितमुदितदयितमनोनयनहारिणीभि-
रन्याभिश्च नृत्यगीतवाद्यविशेषविचक्षणाभिर्नित्योत्सवविनोदालङ्कृ-
तायां तस्यां सुधर्मायां शक्रसभायामीश्वरेण सहासीनः शुकः स किञ्च
यमं भगवन्तमाव्रजन्तं दृष्ट्वा सिंहासनस्य पार्श्वे भीतो निलीयते स्म ।
ततो यमराजो यावद् गच्छति स्म, तावत् सुराधिपतिः शुकं पर्य-
पृच्छत् । किमर्थं भवान् यमं दृष्ट्वा बिभेति । शुकः सुरेन्द्रं प्रत्याह—
मम मरणभयादिति । ततस्तस्य शुकस्योत्पन्नमरणभयमद्यैव विनाश-
यिष्यामीति स्मृत्वा पुष्पोदकवैतरणीभिरलङ्कृतं प्रेतराजपुरं मत्स्यै-
रावतमारुह्य देवराजो जगाम । ततः प्राप्तनित्यान्धकारेषु व्यपगत-
ग्रहनक्षत्रचन्द्रसूर्येषु रुधिरमांसास्थिकफपित्तजनितपूतिगन्धेषु रौरव-
महारौरवसूत्रावीचीसप्ततालकुम्भीनरपण्डपावैतरणीशीतोष्णकासवात-
प्रभृतिषु भीमनरकेष्वेकाविंशतिष्वनेकसहस्राणि दुःखान्यनुभवतो
दुष्कृतिनो निरीक्षमाणो यमभवनं प्राविशत् । ततो दूरत एवेन्द्रं दृष्ट्वा
मत्युद्गम्यार्घ्येणाभ्यर्च्य भगवन् ! किमागमनप्रयोजनमित्युक्तवान् ।
ततः शक्रः प्रत्युवाच— अस्ति ममातिप्रियः शुकः । तस्याजरामरणत्वं
दिश त्वामिति । यम आह— अस्मायुर्दातुं न शक्तः । उभाव-
प्यावां कालस्यान्तिकं गच्छाव इति । ततः कालभवनमगच्छताम् ।
कालः सद्यः सत्वरमिन्द्रयमावागतौ दृष्ट्वा प्रत्युद्गम्यार्घ्येणाभ्यर्च्य
लोकेश्वरयोरत्र किमागमनप्रयोजनमित्युक्तौ प्रभू ऊचतुः— भवानस्य
शुकस्याजरामरणत्वं प्रयच्छत्विति । काल आह— आयुर्दातुं नाहं
शक्तः । चित्रगुप्तस्य पार्श्वं गच्छामो वयमिति चित्रगुप्तभवनं ययुः ।
ततश्चित्रगुप्त इन्द्रयमकालानागतान् दृष्ट्वा प्रत्युद्गम्यार्घ्येणाभ्यर्च्य
भवतां किमागमनप्रयोजनमित्युक्तवान् । तेऽस्मै प्रत्यूचुः— भवानस्य
शुकस्याजरामरणत्वं दिशत्विति । ततश्चित्रगुप्तश्चिरं स्मृत्वा प्राह—

अहो निरर्थकं भवतामागमनम् । अप्रियमप्येतच्छ्रूयताम् । अथैवास्य शुकस्यायुःप्रमाणं मया लिखितमिति । इमं श्लोकं चाश्रावयत् —

> यदा शक्रो यमश्चैव काकस्य सहितास्त्रयः ।
> चित्रगुप्तं गमिष्यन्ति मरिष्यति तदा शुकः ॥

ततः श्लोकमिदं श्रुत्वा किञ्चिदप्यनुक्त्वा स्वं स्वं वासं जग्मुः । तस्मात् तादृशैरपि प्रमाणनिबन्धनं न शक्यतेऽन्यथाकर्तुम् । किं पुनरीदृग्भिरस्माभिरित्युक्तवान् काकः । अथ मण्डूको लब्ध्वा-द्रुमङ्कट्वायसनीलमाक्षिकादीनि इदं वचनमब्रवीत् । कदाचिन्महोदधे-र्वेलायां सर्वे कूर्माः पिण्डिता बभूवुः । ते सर्वे गरुडस्य भक्षत्व-मुपागताः । ते सुष्ठु विमृश्य आगतं गरुडमूचुः — भोः पक्षिराज ! भवतोऽस्माकं च व्यवस्था भवतु । त्वमस्माभिः सह धावतात्, ततः परिधावता भवता वयं जिता यदि तदा भक्षयितव्याः इति । अथ तद्वचनं श्रुत्वा तार्क्ष्य ईषत् प्रहस्य इमे किल मया सह धाव-न्त्विति प्रधावितुमतीवोत्सुक इदमाश्चर्यमिति सकुतूहलमेवमस्तु धावाम इत्यब्रवीत् । ततस्ते कच्छपा गरुडवचनं श्रुत्वान्योन्यं कार्यं विचार्य यावत् समुद्रस्य दैर्घ्यं तावदेकैकं प्रसारयामासुः । ततो मनोजवस-न्पन्नो गरुड आकाशे धावति स्म । अथैकः कच्छपः पुरस्तादात्मानं दर्शयित्वा भो भो भवानद्याप्यत्रै(त्री)त्युक्त्वा निलीयते स्म । एवमेव सर्वे कच्छपाश्चक्रुः । सर्वेषां कच्छपानामग्रस्थितो धावन्तं गरुडं दूरत एव दृष्ट्वाद्याप्यस्मानप्राप्तस्तस्मात् त्वं जितोऽस्माभिरित्यब्रवीत् । गरुडः प्रहस्य जितोऽस्मि, अद्यप्रभृति मत्तो मरणभयं नास्ति युष्मा-कमित्युक्त्वा भागात् । सर्वमिदमुद्वीक्ष्य वसुभागः श्लोकमवोचत् ॥

> बान्धवाः सहिताः सर्वे अन्योन्यवशवर्तिनः ।
> निर्जयन्ति रणे शत्रून् गरुडं कच्छपा यथा ॥

तद्वद् वयमन्योन्यवशवर्तिनो भूत्वा शुक्रं नाशयिष्याम इत्याह मण्डूकः । ततो लब्ध्वा प्राह —

नदी गतजला वापि स्याच्चेद् वर्षशतादपि ।
स्थानं तत्र न कुर्वीत पुनरागमशङ्कया ॥

एवमेव मनुष्येषु तेषु पूर्वापकारिषु ।
विश्वासो नोपगन्तव्यो नदी गतजला यथा ॥

एवमप्यसौ कुञ्जरः सदारण्यवासी गुल्मशय्यां प्रत्यटति पुनः प्रतिनिवृत्तः पीडयिष्यति । यथा शबरराजो निरुपायेन गोफलं न प्राप्तवान्, तथानुपायेन कार्यं कर्तुं न शक्यते । तस्मादापृच्छ्य भवतो गन्तुमिच्छामीति गन्तुमारब्धः । ततस्तं गच्छन्तं निरुध्य कथं शबरराजो गोफलं न प्राप्तवानिति मण्डूकादयः पृच्छन्ति स्म । श्रूयतामिति लट्वाकः कथयितुमारब्धः—

कश्चित् किल ब्राह्मणो धेनुं गृहीत्वा शबरविषयं प्राविशत् । ततः प्रविश्य शबराधिपतिं दृष्ट्वा नित्यमुपायनं चक्रे कदाचित् सर्पिः कदाचित् तक्रम् । एवमेव गच्छति काले शबरराजस्तं पप्रच्छ — त्वमिमानि पयोदधिसर्पिस्तक्राणि कुतः पुनरानयसीति । ततो द्विज आह — अस्ति मे गौस्तस्या इमानि पयोदधिसर्पींषीति । राजा प्राह — गौर्नाम किं वृक्षो वा गुल्मो वा लता वा तथ्यं ब्रूहीति । ब्राह्मण आह — चतुःस्तनी खुरविषाणग्रासास्थिमती गौर्नाम । तस्याः फलानि पयोदधिसर्पींषीति । ततः स राजा गां पश्यामीत्युक्त्वा ब्राह्मणेन दत्तामगमत् । आगम्य सर्वतस्तामवलोक्य[illegible] विस्मितो ब्राह्मणाय गोसहस्रं दत्त्वा तामग्रहीत् । ततो ब्राह्मणोऽपि सहस्रमार्थं लब्ध्वा स्वविषयं प्रायात् । अथ शबरराजः स्वगृहमानीय गन्धमाल्यैरभ्यर्च्य कृताञ्जलिः पयोदधिसर्पींषि मे देहीति तामब्रवीत् । पुनर्नवप्रहारैर्ग्रासयित्वा सर्पींषि मे देहीति ब्रवीति स्म । कथञ्चिदपि सा गौर्न ददाति स्म । अहो द्विजेन वञ्चितोऽस्मीति तामरण्ये मुमोच । तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

अक्रमेणानुपायेन कर्मारम्भो न सिध्यति ।
दधिसर्पिःपयांसीव शबरस्य यथा हि गोः ॥

इति । तस्मादनुपायेनारिषु प्रतीकारः कर्तुमशक्य इति सर्वानेवानुमन्त्र्य द्रुमकुट्टश्चैकमाख्यानं कथयितुमारब्धः —

कश्चित् किल महारण्ये शार्दूलश्चरति स्म । स कदाचिद् दंष्ट्रान्तरे गाढमस्थ्ना दष्टे वेदनार्तस्तेनोच्छूनकपोलदर्श आहारमाहर्तुं न समर्थः कश्चन द्रुमकुट्टाश्रितन्यग्रोधमाससाद । तं दृष्ट्वा द्रुमकुट्टः पृच्छति स्म—मृगाधिपते ! किमस्वस्थ इव दृश्यसे इति । ततस्तं व्याघ्रः शनैश्शनैराह—मम दंष्ट्रान्तरगतमेकमस्थि विद्यते । तुभ्यं शशहरिणगवयवृषभमहिषरुरुपृषतादीन् हत्वा दिने दिने प्रभूतं मांसं दास्यामि । तदस्थि निष्कृषेति । तच्छ्रुत्वा द्रुमकुट्टस्तरोरवरुह्य व्याघ्रमासाद्यास्यमुद्घाटयेत्युक्तवान् । तत उद्घाटितं वदनमनुप्रविश्य द्वाभ्यां तुण्डाभ्यां कम्पयित्वोरुकृष्यापकर्षति स्म । अथ स्वस्थो भूत्वा व्याघ्रो जगाम । कदाचिद् वृषभमेकं हत्वा भक्षयन्तं व्याघ्रं दृष्ट्वा द्रुमकुट्टो ममापि मांसं देहीत्युक्तवान् । ततो व्याघ्रः कस्त्वमित्यवोचत् । ततो द्रुमकुट्ट उवाच—भवता विस्मृतं ननु । तव दंष्ट्रान्तरविलग्नमस्थ्युत्कृष्टवानस्मि । ततो व्याघ्रो द्रुमकुट्टस्य वचनं श्रुत्वा प्रहस्याब्रवीत् —

दुग्धे पीतेऽस्य धेन्वा वा तिन्दुकया वा फलार्थिनः ।
उत्तीर्णस्य च नावा वा पुनर्नास्ति प्रयोजनम् ॥

इति । द्रुमकुट्टः प्राह —

पुनर्धेन्वा भवेद् दुग्धं पुनः फलति तिन्दुकः ।
उत्तीर्णस्य च नावापि पुनरस्ति प्रयोजनम् ॥

उपकारिणः पुरुषस्य सत्पुरुषो दुर्लभ इत्यब्रवीत् । एवमुक्तो व्याघ्रोऽतिरुष्टो भो दुर्बलस्य पक्षिणो दर्प इति श्लोकं जगाद —

सदा शोणितभक्षस्य सर्वजीवानुघातिनः ।
दंष्ट्रान्तरविनिर्मुक्तः किं नु लाभं न मन्यसे ॥

तच्छ्रुत्वा द्रुमकुट्टोऽस्य व्याघ्रस्य नेत्रमुद्घाटयामीति निश्चित्य कदाचित् सुप्तस्य व्याघ्रस्य एकं नेत्रं तुण्डाभ्यामुद्धृत्य शाखाग्रगतः श्लोकमुवाच —

> द्रुमकुट्टश्चाहं समर्थश्च उभे नेत्रे निपातितुम् ।
> एकनेत्रविनिर्मुक्तो लाभमेतत् तु मन्यसे ॥

तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

> येन रोषबलं मत्वा बन्धुमन्तं प्रपीडयेत् ।
> स दोषं व्याघ्रवद् भुङ्क्ते द्रुमकुट्टाद् यथाधमः ॥

तस्मादहमपि कुञ्जरस्यैकमक्ष्णोरुद्धारयामीति । काकः प्राह — अहं चैकमक्ष्युत्कर्षामीति । नीलमक्षिकः प्राह—अहं कृमीनुत्पादयामीति । दर्दुरः प्राह — विषमजले स्थित्वा जलमण्डल इव क्रोशामीति । पुनः सर्वे लट्वामिश्रा यथापूर्वमुक्त्वा तथा द्विपमुरुकम्प्य चक्रुः । अथ गजोऽन्धो भूत्वा क्रोशति स्म । इतस्ततः परिभ्रमन् तृषार्तस्तोयमन्विष्य दर्दुरध्वनिं श्रुत्वा जलाशङ्कया महति कूपे पतितो ममार । तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

> उत्साहयन्तः पुरुषा दुर्बला बलिनं रिपुम् ।
> हनिष्यन्ति हि संयाता यथैते पञ्च कुञ्जरम् ॥
> काकश्च द्रुमकुट्टश्च मण्डूको नीलमक्षिकः ।
> लट्वया सह पञ्चैते गजं जघ्नुरुपायतः ॥

तस्माद् बहुविरोधो भविष्यसीत्युक्तवान् शम्बरः । ततो नन्दक आह — यदि चण्डपिङ्गलो मां मारयितुमिच्छति, चण्डपिङ्गल एव मम कृतान्तेन मृत्युर्विहित एव मन्ये । पुनः कृतान्तविहितं यत् कर्म तदन्यथाकर्तुं न शक्यते पण्डितैस्त्रिदशैरपि यथा पटुतस्करः सुवट एव मृतः सर्वथा प्रयतमानोऽपीत्युक्तवान् । शम्बरः पृच्छति स्म । कथं सुवट एव पटुतस्करो मृत इति । अथ नन्दकः श्रूयतामिति कथयितुमारब्धः —

अस्त्युज्जयिनी । तत्र शौचाचारगुणसम्पन्नो यज्ञाध्ययनदानप्रतिग्रहोपवासनिरतः प्रातर्मध्याह्नसायाह्नेष्वनध्ययनसन्ध्योपासनसंस्थाभिज्ञः समुदितवेदविद्यो ज्ञातसकलधर्मशास्त्रो ब्रह्मसमप्रतापशापानुग्रहसमर्थः शिवस्वामी नाम ब्राह्मणः प्रतिवसति स्म । तस्याग्निहोत्रे ब्रह्मासने पटुतस्करो नाम तस्करः कदाचित् सुवर्णमाषत्रयं निक्षिप्य

गच्छति । शिवस्वामी च तेन निक्षिप्तं माषत्रयं गृहीत्वा द्रुततरं गृहं नयति स्म । अथापरेद्युः शिवस्वामी ब्राह्मणः केनेदं माषत्रयं मम प्रह्लासने निक्षिप्तम् । सोऽद्यागच्छति चेत् तं द्रक्ष्यामीति मत्वाग्निहोत्रे निलीन आस्ते । ततः पटुतस्करश्चौर्यं कृत्वा रात्रौ माषत्रयं निक्षेप्तुमारब्धः । तं विप्रो ददर्श । दृष्ट्वा च तं प्राह — पुत्रक ! सदा मम प्रह्लासने माषत्रयं निक्षिपसि । एतावन्तो माषा मम पर्याप्ताः । किमिदानीं तव साधयामीति । पटुतस्कर आह — मम भवद्भिः सर्वं साधितमेव । किन्तु कदा कस्मिन्नहं मरिष्यामीति भवान् कथयितुमर्हतीति । तं ब्राह्मणः प्रत्यवोचत् — पुत्रक ! यद्येषा चिन्ता, अद्य कृष्णपक्षचतुर्दश्यां श्मशानं गत्वा तत्र कश्चिन्मृतोऽक्षतशवोऽस्ति नास्ति वेति दृष्ट्वा शीघ्रमागच्छेति । स तेनैवमुक्तस्तदनन्तरं श्मशानं गत्वा शवमेकमक्षतं दृष्ट्वा पुनरागम्य मृतो मनुष्यः श्मशाने दृष्ट इति ब्राह्मणायाचचक्षे । ततस्तच्छ्रुत्वा ब्राह्मणस्तस्य रक्षां कृत्वा त्वया पूर्वदृष्टं शवमन्यत्र निक्षिप्य विगतसाध्वसो भूत्वा तत्र विश्रासनं नगणयित्वा तत्र स्थाने त्वं शेष्व । ततः शयित्वा तस्य वचनं श्रुत्वा मम समीपमागच्छेत्युक्तवान् । विप्रेणैवमभिहितः स श्मशानं गत्वा तस्य शवस्य पादौ गृहीत्वान्यत्र निक्षिप्य तस्य स्थाने सुष्वाप । अथ शवो महान् भीमं रूपं कृत्वा त्रासयन् कोऽयं मम स्थाने शयित इत्युक्तवान् । सोऽपि तस्य रूपमविगणय्य प्राह — पटुतस्करनामास्मीति । शवस्तं प्रत्यवोचत् — नेदं तव स्थानं, पाटलीपुत्रे सुवटो नाम वटो विद्यते । स तव स्थानमिति । तच्छ्रुत्वा पटुतस्करः प्राह — यद्येवं गच्छामि । तव स्थानं गृह्यतामिति । तमेवमुक्त्वा ब्राह्मणसमीपमागम्य यदाज्ञप्तं भवता तत् तथाकृतं मया । इदं च शवेनोक्तमिति ब्राह्मणाय शशंस । ततो ब्राह्मणः प्रत्यवोचत् । पाटलीपुत्रे सुवट उद्बन्धनं प्राप्स्यसि । न कदाचित् पाटलीपुत्रं गच्छेति । तच्छ्रुत्वा ब्राह्मणमापृच्छ्य स्वगृहं जगाम । स कदाचिन्निर्वेदेन चोरकर्म परित्यज्य किमनेन नगरप्रवेशनेन चोरकर्मणा वा कार्यमनित्ये मानुष्य इति पर्यटन् पाटलीपुत्रस्यातिदूरतो योजनशतमपससार । तत्र कस्मिंश्चिदरण्ये पर्यटन्तं पटुतस्करं

> शक्तश्चाहं समर्थश्च उभे नेत्रे निपातितुम् ।
> एकनेत्रविनिर्मुक्तो लाघमेतत् तु मन्यसे ॥

तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

> येन रोषबलं मत्वा बन्धुमन्तं प्रपीडयेत् ।
> स दोषं व्याघ्रवद् भुङ्क्ते द्रुमकुट्टाद् यथाधमः ॥

तस्मादहमपि कुञ्जरस्यैकमक्ष्णोरुद्धारयामीति । काकः प्राह — अहं चैवमक्ष्युत्क्षर्पयामीति । नीलमक्षिकः प्राह — अहं कृमीनुत्पादयामीति । दर्दुरः प्राह — विषमजले स्थित्वा जलमण्डूक इव क्रोशामीति । पुनः सर्वे लट्वामिश्रा यथापूर्वमुक्त्वा तथा द्विपमुत्क्रम्य चक्रुः । अथ गजोऽन्धो भूत्वा क्रोशति स्म । इतस्ततः परिभ्रमन् तृषार्तस्तोयमन्विष्य दर्दुरध्वनिं श्रुत्वा जलाशङ्कया महति कूपे पतितो ममार । तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

> उत्साहवन्तः पुरुषा दुर्बला बलिनं रिपुम् ।
> हनिष्यन्ति हि संघाता यथैते पञ्च कुञ्जरम् ॥
> काकश्च द्रुमकुट्टश्च मण्डूको नीलमक्षिकः ।
> लट्वया सह पञ्चैते गजं जघ्नुरुपायतः ॥

तस्माद् बहुविरोधो भविष्यसीत्युक्तवान् शम्बरः । ततो नन्दक आह — यदि चण्डपिङ्गलो मां मारयितुमिच्छति, चण्डपिङ्गल एव मम कृतान्तेन मृत्युर्विहित एव मन्ये । पुनः कृतान्तविहितं यत् कर्म तदन्यथाकर्तुं न शक्यते पण्डितैस्त्रिदशैरपि यथा पटुतस्करः सुवट एव मृतः सर्वथा प्रयतमानोऽपीत्युक्तवान् । शम्बरः पृच्छति स्म । कथं सुवट एव पटुतस्करो मृत इति । अथ नन्दकः श्रूयतामिति कथयितुमारब्धः —

अस्त्युज्जयिनी । तत्र शौचाचारसम्पन्नो यज्ञाध्ययनदानप्रतिग्रहोपवासनिरतः प्रातर्मध्याह्नसायाह्नेष्वनध्ययनसन्ध्योपासनसंस्थाभिज्ञः सहृदिग्वेदविद्यो ज्ञातसकलधर्मशास्त्रो अशसममतापशापानुग्रहसमर्थः मित्रस्वामी नाम ब्राह्मणः प्रतिवसति स्म । तस्याग्निहोत्रे महाशने पटुतस्करो नाम तस्करः कदाचित् सुवर्णमाषत्रयं निक्षिप्य

गच्छति । शिवस्वामी च तेन निक्षिप्तं माषत्रयं गृहीत्वा द्रुततरं गृहं नयति स्म । अथापरेद्युः शिवस्वामी ब्राह्मणः केनेदं माषत्रयं मम ब्रह्मासने निक्षिप्तम् । सोऽद्यागच्छति चेत् तं द्रक्ष्यामीति मत्वाग्निहोत्रे निलीन आस्ते । ततः पट्टुतस्करश्चौर्यं कृत्वा रात्रौ माषत्रयं निक्षेप्तुमारब्धः । तं विप्रो ददर्श । दृष्ट्वा च तं प्राह — पुत्रक ! सदा मम ब्रह्मासने माषत्रयं निक्षिपसि । एतावन्तो माषा मम पर्याप्ताः । किमिदानीं तव साधयामीति । पट्टुतस्कर आह — मम भवद्भिः सर्वं साधितमेव । किन्तु कदा कस्मिन्नहं मरिष्यामीति भवान् कथयितुमर्हतीति । तं ब्राह्मणः प्रत्यवोचत् — पुत्रक ! यद्येषा चिन्ता, अद्य कृष्णपक्षचतुर्दश्यां श्मशानं गत्वा तत्र कश्चिन्मृतोऽक्षतशवोऽस्ति नास्ति वेति दृष्ट्वा शीघ्रमागच्छेति । स तेनैवमुक्तस्तदनन्तरं श्मशानं गत्वा शवमेकमक्षतं दृष्ट्वा पुनरागम्य मृतो मनुष्यः श्मशाने दृष्ट इति ब्राह्मणायाचचक्षे । ततस्तच्छ्रुत्वा ब्राह्मणस्तस्य रक्षां कृत्वा त्वया पूर्वदृष्टं शवमन्यत्र निक्षिप्य विगतसाध्वसो भूत्वा तत्र विभ्रासनं नगणयित्वा तत्र स्थाने त्वं शेष्व । ततः शयित्वा तस्य वचनं श्रुत्वा मम समीपमागच्छेरित्युक्तवान् । विप्रेणैवमभिहितः स श्मशानं गत्वा तस्य शवस्य पादौ गृहीत्वान्यत्र निक्षिप्य तस्य स्थाने सुष्वाप । अथ शवो महान् भीमं रूपं कृत्वा त्रासयन् कोऽयं मम स्थाने शयित इत्युक्तवान् । सोऽपि तस्य रूपमविगणय्य प्राह — पट्टुतस्करनामास्मीति । शवस्तं प्रत्यवोचत् — नेदं तव स्थानं, पाटलीपुत्रे सुवटो नाम वटो विद्यते । स तव स्थानमिति । तच्छ्रुत्वा पट्टुतस्करः माह — यद्येवं गच्छामि । तव स्थानं गृह्यतामिति । तमेवमुक्त्वा ब्राह्मणसमीपमागम्य यदाज्ञप्तं भवता तत् तथाकृतं मया । इदं च शवेनोक्तमिति ब्राह्मणाय शशंस । ततो ब्राह्मणः प्रत्यवोचत् । पाटलीपुत्रे सुवट उद्बन्धनं प्राप्स्यसि । न कदाचित् पाटलीपुत्रं गच्छेति । तच्छ्रुत्वा ब्राह्मणमापृच्छ्य स्वगृहं जगाम । स कदाचिन्निर्वेदेन चोरकर्म परित्यज्य किमनेन नगरप्रवेशनेन चोरकर्मणा वा कार्यमनित्ये मानुष्य इति पर्यटन् पाटलीपुत्रस्यातिदूरतो योजनशतमपससार । तत्र कस्मिंश्चिदरण्ये पर्यटन्तं पट्टुतस्करं

दृष्ट्वा मृत्युः स्वमायया परमरूपदर्शनीया युवतिर्भूत्वा पटुतस्करमास-
साद । तां दृष्ट्वा जातमन्मथः पप्रच्छ—का त्वं पृथुजघने ! मध्यदरिद्रे !
पयोधरगमपृद्धे ! यौवनरुचिराङ्गि ! नभःस्थले चन्द्रलेखेव विराजमाने !
इति । सा तेनैवमुक्ता वसुमती नाम वणिग्दारिका महति सार्थे बन्धु-
जनपरिभ्रष्टा मद्भाग्यशेषाद् भवन्तमुपागता मम भवान् गतिः, पति-
र्भवत्वित्युक्तवती । स तस्या वचनं श्रुत्वैवमस्त्वित्यवोचत् ।

> कवित्वमारोग्यमतीव मेधा
> स्त्रीणां प्रियत्वं कनकस्य लाभः ।
> स्वप्नेषु तथ्यं स्वजनेषु पूजा
> स्वर्गच्युतानामिह चिह्नमेतत् ॥

इति गृहीत्वा सुहृद्बान्धवानां विश्राव्य महोत्सवेन विवाहं कृत्वा वसु-
मतीं प्राप्तवान् पटुतस्करः । तस्यां प्रियायामनुरागेण चिरकाले ग-
च्छति सा कदाचिद् वसुमती तस्याग्रतो नित्यमेव रोदिति स्म । ततः
स्तेन किमर्थं रोदिषीति पृष्टा वसुमत्याह — पाटलीपुत्राभ्याशे चित्र-
ग्रामो नाम ग्रामोऽस्ति । तस्मिन् मम गुरवश्च सुहृज्जनाश्च प्रतिवसन्ति ।
तान् कदा नु द्रक्ष्यामीत्यहोरात्रं चिन्तयन्ती रोदिमीति । तच्छ्रुत्वा
पटुतस्करो भद्रे ! पाटलीपुत्रं मम गन्तुमशक्यमित्युक्तवान् । भूयश्च
तया निर्बध्यमानः पटुतस्करः प्राह — तव प्रीतिकरस्य मम मरण-
चिन्ता न कार्या ।

> मनुष्याणां प्रियः पुत्रः पुत्रादपि धनं प्रियम् ।
> धनादपि प्रियाः प्राणाः प्राणादप्यङ्गनाः प्रियाः ॥

इत्येवमुक्तवति पटुतस्करे साब्रवीत् — उपनगरमिति । पटुतस्करः
प्राह — भवतु पाटलीपुत्रं गच्छावेति तया सह शकटयानमारुह्य गन्तु-
मारब्धः । तस्मिन् पाटलीपुत्रस्योपनगरं गच्छति नगरेश्वरस्य मेघ-
घोषस्य पट्ट इति तं मार्गमार्गणपरायणैः पुरुषैः स प्राप्तः । ततस्तैरयमुक्तस्तिष्ठ,
तिष्ठ तव शकटयाने किं मेघो विद्यत इति । पटुतस्करः प्राह — मम
शकटयाने मेघो नास्ति । मम भार्येयमिति । आरक्षिपुरुषाः प्राहुः —
तव शकटयानं परिच्छेदनीयं नो दर्शयित्वा यथाद्य नास्ति यदीति ।
तेष्वेवं द्वारमावृत्य स्थाप्य शकटयानमारुह्य मेघरूपधरं मृत्युमपश्यत् ।

दृष्ट्वायं मेषचोर इत्यवोचत्। ततः सर्व एव सम्भूय पट्टुतस्करं बद्ध्वा राज्ञः सकाशं नीत्वा अयं चोर इति राज्ञे दर्शयित्वा तस्य वटस्य शाखायामुद्बध्यारक्षिकाः स्वदेशं गताः। मृत्युश्च गतः। तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

तेन नास्मिन् गते मृत्युरिति ज्ञात्वा न मुच्यते।
जानन्नपि गतो नाशं सुवटे पट्टुतस्करः॥

प्राप्तव्यं लभते वित्तमप्राप्तव्यं न लभ्यते।
विहिते प्राप्तवान् मृत्युं सुवटे पट्टुतस्करः॥

इति ब्रवीति स्म नन्दकः। अथ तद्वचनं श्रुत्वा शम्बरो जगाद— यद्भविष्य इव त्वमपि सीदसीति। तं प्रत्याह नन्दको यद्भविष्यं श्रोतुमिच्छामीति। ततः शम्बरः श्रूयतामिति कथयितुमारब्धः —

कस्मिंश्चित् किल महातटाके कारण्डवचक्रवाकहंसजलकुक्कुटादिभिरुपशोभिते पद्मोत्पलसौगन्धिककुमुदकह्लारकुवलयसङ्कुले स्फटिकसङ्काशे अनागतविधाता च प्रत्युत्पन्नमतिश्च यद्भविष्यश्चेति त्रयो मत्स्याः प्रतिवसन्ति स्म। कदाचिद् भिन्ने तटाके तेष्वनागतविधाता स्रोतसा गत्वा नदीमेव ता प्रविवेश। अथाल्पजले तटाके मात्सिकैः प्रक्षिप्यमाणेषु जालेषु प्रत्युत्पन्नमतिर्विगतासुरिव जलस्योपरि शिश्ये। तं गृहीत्वा मात्सिकः प्रक्षालयितुं नदीं प्राविशत्। स च तद्धस्तादाप्लुत्य नदीं प्राविशत्। ततस्तयोर्गतयोरपि यद्भविष्यो यथापूर्वमेव जले शिश्ये। अथ कदाचिन्मात्सिकस्तं गृहीत्वा जगाम। तं दृष्ट्वा वसुभागः श्लोकमब्रवीत् —

अनागतविधाता च प्रत्युत्पन्नमतिश्च यः।
द्वाविमौ सुखमेधेते यद्भविष्यो विनश्यति॥

दैवं मत्वा निरुत्साहो ध्रुवं नाशमवाप्नुयात्।
दैवं मत्वा यथा नष्टो यद्भविष्यो द्विजोत्तमः॥

इति। तस्मादनागतकार्यज्ञेन वा प्रत्युत्पन्नमतिकुशलेन वा भवितव्यमिति। अतः परं किञ्चिन्नोक्त्वा ममाभिमतमेव भविष्यतीति

चिन्तयित्वा स्वस्वामिसमीपं जगाम । दूरतः स चण्डपिङ्गलं नमस्कृत्य ममाधमस्यापि वाक्यं श्रोतुमर्हसीति । यथा वस्तवाख्यं राजा शुश्रावेत्याह । अथ सिंहः कथं तदित्यवोचत् । स च श्रूयतामिति कथयितुमारब्धः—

अस्त्ययोध्या नाम नगरी । तस्यामनरण्यो नाम राजा बभूव । स कदाचिन्मृगयार्थमरण्यमनुप्रविष्टो मृगान् हत्वा परिभ्रमन् गङ्गातीरे केनचिदधमसर्पेण मैथुनं कुर्वतीं नागकन्यकां ददर्श । तं दृष्ट्वा मत्पालितविषय ईदृशो धर्मलोपो न भवेदिति नागकन्यकां वेत्रप्रहारैर्बाधयित्वा तमधमसर्पं द्विधा छेदयित्वा स्वपुरं जगाम । ततो गते राज्ञि नागकन्यका द्विधा छिन्नं स्वकान्तं दृष्ट्वा स्वशरीरे प्रकटं दृश्यमानान् वेत्रप्रहारांश्च दृष्ट्वा प्राकृतपुरुषेण निष्करुणेनेदं क्रूरकर्म कृतमिति गजराजपरिक्षुभिता जाह्नवीव परिम्लाना पितुः सकाशं गत्वा सलज्जावनतमुखी स्वकुचकुम्भौ नयनवारिणा स्नापयन्ती सन्ध्योपासनं कुर्वतः पितुः सकाशे तस्थौ । अथ नागपतिस्तस्याः शरीरे वेत्रप्रहारांश्च तां रुदतीं च दृष्ट्वानुष्ठितसन्ध्योपासनः केन दुरात्मनेमामवस्थां प्रापितासीति तां पर्यपृच्छत् । ततः सा भुजगकन्यकातिदुःखिता प्रमृज्य नेत्रे भागीरथीतीरे क्रीडन्तीं मामेकाकिनीं दृष्ट्वायोध्याधिपतिः सर्वा दिशो विलोक्य मामात्मवशां कर्तुमसमर्थो वेत्रदण्डेन ताडयित्वा जगामेति व्याचचक्षे । ततोऽस्या वचनं श्रुत्वा सविषज्वालं निःश्वस्य कुपितो मातुः सकाशं व्रज त्वमहमेव तमधमोचारमयोध्याधिपतिं गत्वा विनाशयामीत्युक्त्वा जगाम । तत्र गत्वा च विद्रुमस्तम्भमुक्ताकृतसुवर्णभित्तिविचित्रस्फटिकतलं नानाकुसुमविभूषितं राज्ञो वासगृहं प्रविश्य शयने प्रियया सह शयानं दृष्ट्वा जने निलीने देव्यां सुप्तायामिमं दंशयामीति स्थिते । ततो राजमहिषी जागरिता राजानमार्य ! मृगयां गतेन भवता किञ्चिद् दृष्टमाश्चर्यमस्ति नास्ति वेति पप्रच्छ । ततो राजा प्रोवाच । भद्रे ! मया दृष्टमाश्चर्यं कथयामि । कश्चिदधमसर्पः कयाचिन्नागकन्यया सह ग्राम्यधर्मं कुर्वाणो मया दृष्टः । ततोऽहं तादृशं दुष्टरूपं दृष्ट्वा कुपितोऽधमसर्पं द्विधा छेदयित्वा नाग-

कन्यकां वेत्रदण्डैस्ताडयित्वागतोऽसीति । तच्छ्रुत्वा देवी विडम्ब्य सुष्वाप । राजा जागर्ति स्म । ततो नागराजः राज्ञे स्वरूपं दर्शयित्वा सुष्ठु मत्सुतां शासितवानसि । तस्माद् वरं वृणीष्वेत्युक्तवान् । तच्छ्रुत्वा राजा भवता यदि वरं दीयते पशुमृगव्यालपक्षिसरीसृपाणां वचनं श्रोतुमिच्छामि । तस्मात् तदेव दीयतामित्युक्तवान् । ततो नागराजः पश्वादीनां वाक्यज्ञो भविष्यसीति । मदनुज्ञया तेषां वचनानि केषाञ्चिन्मा कथय । यदि कथयसि तदा मरिष्यसीत्युक्त्वा जगाम । अथ कदाचिद् भित्तितले मिथः कलहयद् गृहगौलिकामिथुनमपश्यत् । तत्र पुमान् प्रतिकूलया प्रियया सह शयितः स्त्रियमुक्तवान्— भद्रे! त्वमेवं नित्यमतिकूलासि । मद्वाक्यं न करोषि । पश्य नृपं कान्तयानुकूलया सह शयानमिति । एवं भार्यया विवदन्तं गृहगौलिकं दृष्ट्वा राजा जहास । अथ प्रबुद्धा देवी प्राह— आर्य! किमर्थं हससीति । राजा न किञ्चिदस्तीत्याह । ततो देवी यदि न कथयसि तव मम च पुनरेतावदेवेत्युवाच । राजा कथयामि चेदहं म्रिये इत्युवाच । देवी यद्यपि म्रियेथास्तथापि कथयेत्युवाच । राजा तस्यामनुरक्तः कामातुरश्च प्रिये! कथय कथयेति ब्रवीषि चेत् तत्कथानन्तरं मम मरणं भविष्यत्यथापि ते वरोरु! कथयिष्यामि । श्मशानं गच्छाव इति प्रोच्य बहिर्नगरे चितां कारयित्वा देव्या सहासीनः मरणे कृतनिश्चयोऽगच्छत् । परिखातटे जनानां समूहमपश्यत् । तस्मिन् समूहेऽजैका मेषं प्रत्याह प्रियावाक्प्रसरन्तीं तृणवल्लीं तरुणीमानय । नानयसि चेत् तव भार्या न भवामीति ब्रुवन्तीमजां मेषोऽब्रवीत् । किममुं नृपतिमिव मामपि जडं मन्यसे । त्वं म्रियसे यद्यपि तृणवल्लीं नानयामि । किं त्वया कार्यम् । ममानेका भार्याः सन्तीति । अथ नृप एवं ब्रुवतो बस्तस्य वचनं श्रुत्वा तथ्यमेतत् नानाविभ्रमवेषधारिणीनां युवतीनां शतानि सन्ति ममापि । साधुरनेन बस्तवाक्येनोपायः प्रवृत्त इति मत्वा कुपितो राजा हस्तिनो देवीमवतार्य कर्णनासे छेदयित्वा द्विपाध्यक्षेभ्यो हस्तिनां पचनं प्रादात् । तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

उत्तमाधममध्यानां श्रोतव्यं वचनं बुधैः ।
तत्र चात्महितं ग्राह्यं बस्तवाक्यं यथा नृपः ॥

एवं कथयित्वा दुष्टजम्बुको दुःखितस्य मृगपतेः पुनरकथयत्—नन्दकः शृङ्गैस्तीक्ष्णीकुर्वन्नासीनो मया दृष्टः । यदि नन्दकस्य समीपं गच्छेस्तदा मा प्रमादः कर्तव्यः । अथवा न गन्तव्यं भवानशृङ्गः । नन्दकः शृङ्गवान् बलवांश्च । विद्वद्भिरभिहितोऽयमेकः श्लोकः श्रूयताम्—

नदीनां च नखीनां च शृङ्गिणां शस्त्रपाणिनाम् ।
विश्वासो नोपगन्तव्यः स्त्रीषु राजकुलेषु च ॥

इति । तद्वचनं श्रुत्वा चण्डपिङ्गलो द्विधाभूतहृदय एवं यदि तस्याभिप्रायं ज्ञातुमिच्छामीति । शम्बरेण सह गत्वा न्यग्रोधपार्श्वमुपविवेश । अथ चरितुं गतो नन्दकस्तत्क्षणे वर्षे पतितेऽग्रीकृतशृङ्गो वटवृक्षाभिमुखो गन्तुमारब्धः । अथ तं दृष्ट्वा क्षुद्रसृगालः अस्य चरितमिदं मद्वाक्यमिदं न श्रद्धाति भवान् । भवन्तं प्रहर्तुमागतं नन्दकं पश्येत्यभिहितवान् । अथ शम्बरस्य वचनेन तं निरीक्ष्य ध्रुवमयं प्रहर्तुमागच्छतीति मत्वा नन्दकमाप्लुत्य पादेन मस्तके प्राहरत् । अथ गोपतिश्च प्रहतमस्तकः खुरैरवनितलं कृषन् क्षुभितमहार्णव इव गर्जन् सिंहं पातयित्वा शृङ्गेण वामपार्श्वे निर्बिभेद । अथ वृषभेण परिक्षतो मृगपतिः पुनरुत्थायाप्लुत्यातिकुपितः पादाभ्यां कर्णं गृहीत्वा ककुदं भिन्दन् वृषेणोरसि गाढं प्रहृतः क्षितितले प्रलम्बितचरणो वृषस्य कण्ठं दष्ट्वा पतितः स्वर्यातो मृगपतिः । वृषभः सम्भिन्नमस्तककुकुरकण्ठः कालधर्ममुपाययौ । अथ वृषभो वृषभध्वजस्य कैलासशिखरं प्रायात् । स च कण्ठीरवो वैकुण्ठं जगाम । वसुभागः श्लोकमवोचत्—

स्निग्धान् प्रीतान् सौहृदेनार्थबद्धान्
प्रायो दृष्ट्वा भेदयन्त्येव नीचाः ।
पश्यैतेषां तादृशं मैत्रभावं
दुष्टः क्रोष्टा गोमृगार्यां बिभेद ॥

न नीचजनसंसर्गात्मरो भद्राणि पश्यति ।
वृषसिंहगता प्रीतिर्जम्बुकेन विनाशिता ॥
यतो नीचेन संसर्गाद् वृषसिंहौ निपातितौ
तस्मात्र नीचसंसर्गं प्राज्ञः कुर्यात् कदाचन ॥

क्षुद्रं मित्रं न कुर्वीत नोपसेव्यं कदाचन ।
पश्य सिंहवृषौ वीरौ सृगालेन विनाशितौ ॥

इति तन्त्रोपाख्याने नन्दकप्रकरणं समाप्तम् ॥

---

## अथ पक्षिप्रकरणम् ।

सर्वलोकैककर्तारं प्रणम्य गरुडध्वजम् ।
पक्षिप्रकरणं वक्ष्ये नयमार्गाश्रितं हितम् ॥

पुरा किल सर्वभूतसमुत्पत्तिकाले सुरासुरगणभुजपरिगृहीतभुजङ्गमपतिभोगरज्जुपरिणद्धमध्यभ्रमन्मन्दरमन्थोन्माथितकलकलायमानमहोर्मिमालोत्पतितफेनतिमितिमिङ्गिलाद्यनेकसत्त्वसमाकुलसलिलस्य भगवतो नारायणस्याहिप्रवरशयनभूतस्य महोदधेर्वेलायां हंसकारण्डवचक्रवाकजलकुक्कुटप्लवलाहककुररक्रौञ्चशुकशारिकाभृङ्गराजजीवंजीवकमयूरकलविङ्ककपिञ्जलद्रुमकुक्कुटलट्वातित्तिरिचातककोकिलचकोरकौशिकनत्यूहकाककङ्कश्येनगृध्रकपोतप्रभृतयोऽन्ये च जलस्थलचराः पक्षिणः सर्वे सम्भूयासते स्म । तेषु पक्षिषु केचिदूचुः — इह बलवान् दुर्बलं हन्ति । स्वचारित्रं च न करोति । एवमेव कर्तारो बहवः सन्ति । एषा परिषद् दुर्लभेति विचिन्त्य अस्मद्विज्ञापनामिति । तच्छ्रुत्वा परमविद्वान् शुकः प्राह —

बलवान् दुर्बलं हन्ति हीनान् हन्ति तथा वरः ।
भूमौ यथा नराः सर्वे हीनान् हन्ति तथा वयम् ॥

अराजके तु लोकेऽस्मिंस्तस्माद् राजा विधीयताम् ।
राजा राज्ये चिरं रक्षां कृत्वा स्वर्गमवाप्नुयात् ॥

इति । सुष्ठु शुकवचनमिति सर्वे एवोचुः — को नु खलु राज्यार्हः कस्मै राज्यं ददाम इत्यब्रुवन् । तत्र क्रौञ्चा ऊचुः — हंसेष्वन्यतमाय

राज्यं दीयताम् । हंसा महाकुलीना विविधदिव्यकुसुमावकीर्णे महासरसि मानसेऽधिवासाः सकलजनमनोभिरामरूपगतयो नरलोकमलंकुर्वन्तस्ते राज्यार्हाः । तेष्वेकः सामर्थ्ययुक्तोऽस्मत्परिपालने नियम्यतामिति । ततस्तच्छ्रुत्वासमीक्षितपूर्वापरः परमद्वेषी नाम काक उत्थाय स्वजातिसंसिद्धधाष्टर्यात् सहसाब्रवीत् — केन खलु हंसे राज्यार्हता दृष्टा । स्त्रीष्विव विलासकान्तिमाधुर्यस्वरमात्रमेतेषु दृश्यते । न दूरपातित्वश्रमसहत्वादयो गुणा विद्यन्ते इति । ततो हंसा धैर्यगुणयोगादविभावितमन्यवः किञ्चित् स्मयमानाः प्रत्यवोचन् — यदि वयमदूरपातिनः सामर्थ्यरहिता भीरवः श्रमासहिष्णवश्च तदद्यैव परीक्षन्तामस्मदीयेन केनचित् प्रत्ययपरेण । युष्मदीयानां चाविनैकः समुद्रस्योपरि पततु । तत्रास्माकं भवतां च दूरपातित्वं श्रमसहत्वं च शौर्यं चाद्यैव व्यक्तिं गमिष्यति । अयं खलु समुद्रस्योपरि शतसहस्राणि योजनान्युद्वर्तते । अस्माकं शक्तिरस्ति चेदेको विधीयतां युष्माकम्, योऽसावेतत् करोति स प्रधानम्, अन्योऽधम इति । अथ ध्वाङ्क्षा अविदितपरात्मसामर्थ्याः स्वधाष्टर्यात् तत् तथेत्युपगम्य विविधोच्छिष्टस्थिरपावीराङ्गवलयरसमाज्ञातं काकमनुशशंसुः । अथ हंसा अन्तर्मुखावगृह्यमाणहासाः कञ्चिदेव हंसपोतकं सावज्ञं समीक्ष्य शीघ्रमुत्पतेत्यूचुः । स बाढमित्युक्त्वा पोतक उत्पपात । काकश्च पदशतैरपि हंसं न प्राप्तः । ततो हंसपोतको वीरस्वनानि कुर्वन्नुत्पपात । काको द्वीपद्रुमानपश्यन् क्व नु पतामीति भीतश्चाकाशे परिभ्रमति स्म । भ्रान्तो भूत्वा समुद्रमध्ये पपात । ततस्तत्र पतन्तं पादाभ्यां तुण्डेन च सलिलं स्पृशन्तं विक्रोशन्तं काकं दृष्ट्वा किमु पतसीत्येवमुक्त्वा विहस्य वायसं पक्षयो गृहीत्वा पक्षिसमुदायमागम्य दर्शितवान् । ततो द्विजा हंसपोतं प्रशशंसुः । काकस्य निन्दां प्रचक्रिरे । ततस्तं दृष्ट्वा वसुभागः श्लोकमवोचत् ।

> दर्पादनवबुद्धात्मा विग्रहं बलवत्तरैः ।
> पराभवमवाप्नोति हंसैर्ध्वाङ्क्ष इवार्णवे ॥
> परुषो नैव वक्तव्यः सभायामपि कदाचन ।
> विक्रुष्टं वायसं पश्य हंसेन विनिपातितम् ॥

इति । काकनिमित्तविरोधाद्धंसानां राज्यप्राप्तिर्नासीत् । ततस्तस्मिन् पक्षिसमुदाये श्येना ऊचुः—गृध्रेष्वन्यतमाय राज्यं दीयतामिति । तच्छ्रुत्वा दीर्घजङ्घो नाम काक उत्थाय प्राह—गृध्रेभ्यो राज्यं न प्रदातव्यम् । रक्तकर्णनामानं गृध्रं राजानं कृत्वा यथा मृगपक्षिणो नष्टास्तथा विनाशो मा भूदिति सर्वानेव वारयति स्म । ततस्ते रक्तकर्णनामानं राजानं कथयस्वेत्यूचुः । ततो दीर्घजङ्घः कथयति स्म ॥

पुरा किल रक्तकर्णनामा राजा बभूव । तस्य शार्दूलसृगालावमात्यावास्ताम् । तौ मृगपक्षिण आहूयोचतुः—अस्मिन्नरण्ये राजानमसेवमाना भवन्तः किमर्थमत्र चरन्तीति त्रासयित्वा तान् भृत्यकर्मणि न्ययुञ्जाताम् । स ततो गृध्रराजः सृगालममात्यं व्याघ्रं सेनापतिमकरोत् । ततः शार्दूलसृगालौ प्रीतिनिरन्तरमानसौ मृगपक्षिषण्डं गत्वा दिने दिने राज्ञे पक्षिभिः पञ्चदश पक्षिणो दातव्या मृगैर्दशैवेत्येवं स्वामी आज्ञापयतीत्युक्त्वा तद्दत्तान् सर्वान् पक्षिणो मृगांश्च भक्षयतोर्गच्छति कालः । प्रतिदिनं भक्ष्यमाणा मृगपक्षिणः क्षयमुपागमन् । ततो वचनमवोचत् ॥

> रक्तकर्णो महाराजोऽमात्यः सर्पमातुलः ।
> सेनापतिश्च पिङ्गाक्षस्तत् पुनर्न चिरं भवेत् ॥
> सेनापतौ नृपेऽमात्ये दुष्टे सत्यचिराद् ध्रुवम् ।
> विनश्यन्ति नराः सर्वे गृध्रान्मृगगणा इव ॥

इत्युक्ते गृध्रा ऊचुः—अस्माकं यदि राज्यं न प्रदीयते काकानां प्रवराय दीयतामिति तच्छ्रुत्वा नीतिचपलो नामोलूक आह—काकेभ्यो राज्यं न प्रदातव्यम् । मांसभक्षाः काकाः क्षुद्राश्च । ये मांसमेव चरन्ति ते धर्माधर्मं न चिन्तयन्ति, वृद्धव्याघ्रवदिति । ततः पक्षिणः प्राहुः, वृद्धव्याघ्रं श्रोतुमिच्छामीति । श्रूयतामिति स कथयति स्म ॥

अस्ति किल तमसा नाम नदी । तस्यास्तीरे महान् शाल्मलीवृक्षः । तस्मिन् कृतप्रतिश्रयः प्रतिवसामीति तस्याधस्तादन्यव्याघ्रो नाम व्याघ्रः प्रतिवसति स्म । तस्य समीपे कुन्दगुल्मे शशः प्रतिवसति

स्म। स कदाचिन्महारण्यमनुप्रविष्टः संवत्सरं नागात्। अथ कपिञ्जलस्तस्य निवासं प्रतिवसति स्म। अथ पूर्णे संवत्सरे शश आगम्य स्वनिवासस्थं कपिञ्जलं वीक्ष्याह—को भवानस्मिन् निवास आसीन इति। कपिञ्जलः प्राह—कथं ते निवास इति। शशः प्राह। कथं ते निवास इति। कपिञ्जलः प्राह—किमर्थमावयोर्विवादः। एतस्य शाल्मलीवृक्षस्याधस्तात् कश्चिद् व्याघ्रस्तपः कुर्वन् प्रतिवसति स्म। आवयोर्यथान्यायं स परीक्षिष्यति। तत्र गच्छाव इति। ततस्तौ तस्य समीपं गत्वा जरितशार्दूलं दूरत एव प्रणम्य स्थितौ। तौ दृष्ट्वा हृष्टो व्याघ्र आहारभूताविमौ प्रजापतिनोपपादितौ ममेति मत्वा उपायेन भक्षयामीति परितुष्टमना एवमुवाच—अहं वार्धकान्न शृणोमि। उभावपि कर्णौ समाश्रित्य कथयतामिति। ततस्तौ तच्छ्रुत्वा तं विवादं तस्य कर्णयोः कथयितुमारब्धौ। सोऽपि वामपादेन कपिञ्जलं दक्षिणपादेन शशं च गृहीत्वा यथेष्टमभक्षयत्। ततो वचनमवोचत्—

> क्षुद्रमर्थहरं चापि न विवादं समाचरेत्।
> उभावपि विनश्येतां यथा शशकपिञ्जलौ॥
>
> क्षुद्रमर्थपतिं प्राप्य द्वावपि व्यवहारिणौ।
> सममेव विपद्येते यथा शशकपिञ्जलौ॥

इति वा पाठः। तस्मादयं क्षुद्रः काको मांसभक्षो राज्यार्हो न भवेदित्युवाच स उलूकः। ततश्चकोर उवाच—जीवञ्जीवको राजा भविष्यति। ततोऽमर्षको नाम काक उत्थायावदत्—मूर्खा अशक्ता जीवञ्जीवका इति। ततः पक्षिणः पप्रच्छुः कथं ते मूर्खा इति। बलिभोजिनः कथयन्ति स्म। कश्चित् सार्वभौमो नाम राजा कुष्ठेनाभिभूतो वैद्यानाहूय य इमं व्याधिमपनयिष्यति तं साधु पूजयामि। ततः प्रधानो वैद्य आह—यदि जीवञ्जीवक आनीयते ततो व्याधिमपनयामीति। तच्छ्रुत्वा राजा शाकुनिकानाहूय मम जीवञ्जीवकमानयन्तु भवन्तः साधवः, पूजयामीत्यवोचत्। तेष्वेकः शाकुनिक आनयामीत्युक्त्वाटवीं प्राविशत्। ततो दिवसपार्श्वे मालतीलतापरि-

वृतम्, अतिमधुरमृणालकोमलकमलकुमुदकुवलयकह्लारपरिमललोलुप-निलीनसकलजलपतत्रिजातरम्यं सरः समाससाद । तस्मिन् सरसि जीवंजीवकस्य प्रचारज्ञ उन्माथं प्रसार्य निक्षिपति स्म । जीवंजीवकश्च तत् सर्वं शाकुनिकस्यारम्भं वीक्ष्य तं देशं नागमत् । तस्य सहचरः कश्चिद् बकः पाशे निपतितः । तं दृष्ट्वा जीवंजीवकस्त्वां मोचयामीति पाशे निपतितः। तत आत्मानं प्रच्छाद्य स्थितः शाकुनिकः पाशे निपतितं तं दृष्ट्वा परितुष्टो विक्रीणामीति । ततस्तमाह जीवंजीवकः — तव सुवर्णस्याष्टभारं दास्यामि, मां मुञ्चेति । ततः शाकुनिको जन्मनः प्रभृति विहङ्गमानेव मारयामीति केनापि पक्षिणा सुवर्णं दास्यामीति नोक्तम् । तस्माद् त्वद्वचनमपि न श्रद्धेयमिति तं गृहीत्वा राज्ञोऽदर्शयत् । वैद्यस्तमादाय भद्रासने राजानमुपवेश्य शातकुम्भमयं घटसहस्रं सर्वतीर्थोदकसम्पूर्णं दक्षिणहस्तेन तं जीवंजीवकं राज्ञो मूर्धनि निक्षिप्तं गृहीत्वा तीर्थोदकेनाभ्यषेचयत् । राज्ञि जीवंजीवकस्योपरि स्राव्यमाणा जलधारापतन् । ततस्तत्क्षणेनैव राजा नीरोगोऽभवत् । ततो राजा स्वस्थो भूत्वा परितुष्टः किञ्चिन्न विगणय्य जीवंजीवकं मुमोच । वैद्याय ग्रामशतं प्रादात् । शाकुनिकाय कोद्रवकुम्भं सुराकुम्भं च दत्तवान् । ततः प्रासादशृङ्गे स्थितो जीवंजीवकः श्लोकमुवाच —

> त्रयो मूर्खा महाराज कृत्स्नेऽस्मिन् पृथिवीतले ।
> भवान् शाकुनिकश्चाहं जीवंजीवक एव च ॥

कस्मान्मूर्खत्वमिति चेत् अहं पाशं दृष्ट्वा निपतितः । शाकुनिकश्च मया दीयमानं सुवर्णस्याष्टभारं नादत्तवान् । त्वं च गृहीतं मां मोचितवान् । यदि मम मांसं भुक्तवान् जरामरणं न प्राप्स्यसीत्युक्त्वा समुत्पपात । राजा प्रतिवाक्यमदत्त्वा शनैश्शनैः शयनं गत्वा विषादमगात् । तत्र वचनमवोचत् —

> प्रमादो नैव कर्तव्यो नरेण शुभमिच्छता ।
> प्रमादाच्छोचते राजा जीवंजीवकतो यथा ॥

तस्मात् स्वहितपरहितज्ञैरेव राजभिर्भवितव्यम् इति । अथ कश्चित् कोतोऽब्रवीत् — शुकानामन्यतमाय राज्यं दीयतामिति । ते बुद्धिमन्तो नीतिमन्तः प्रतिकर्तुं च समर्था इति । तद् कथमिति चेच्छ्रूयतामिति कथयितुमारब्धः — कश्चित् किल वैश्यकुमारो रूपवान् सुकथनो नाम सुराष्ट्रे बभूव । स कदाचिन्महेश्वरायतनार्थं गृहादागच्छन्तीं सखीभिरनुगतां सर्वाङ्गमनोहरां देवकन्योपमां स्त्रीगुणविलाससौरभ्यादिभिरुर्वशीसदृशीं गुणवतीं नाम वणिग्दारिकां ददर्श । दृष्ट्वैव कामाभिभूतो गृहमागम्य स्नानभोजनाद्यनुष्ठाननिवृत्ताभिलापो नैकहृदयः पर्यङ्कमधिशेते । ततोऽस्य पिता धर्मस्वामी नाम तद्वृत्तान्तमखिलमवगम्य पुत्रप्रियत्वात् तदहरेव तद्गृहं गत्वा तत्पितरं शिवस्वामिनमब्रवीत् मम पुत्राय तव दुहिता दातव्येति । शिवस्वामी तं प्रत्युवाच — तस्मै प्रदातुं नेच्छामि । यस्मै स्वयं महेश्वरो देवो देहीति मामाज्ञापयति तस्मै ददाम्यहमित्युक्तवान् । तच्छ्रुत्वातिरुष्टः स्वगृहमागम्य पुत्रायाचचक्षे । तद्वाक्यं श्रुत्वा वैश्यकुमारो बाढं मदनाभिभूत दीर्घरात्रं तामेव चिन्तयन् कुतो मम लभ्येति कृशशरीरो बभूव । तस्य शुकः शिक्षितो गृहवलिनीमादिभिः कनकपञ्जरस्थस्तमतिकृशं दृष्ट्वा किं भद्रमुख ! गाढं कृशोऽसीत्यब्रवीत् । ततस्तच्छ्रुत्वा किं वे ब्रवीमि, प्रयोजनं नास्ति तथापि श्रूयतामित्यब्रवीत् । एकां वैश्यदारिकां दृष्ट्वा कन्दर्पचण्डाग्नेनाभिभूतोऽस्मि । तां प्राप्तुमुपायं चिन्तयन्नविद्वन्नोऽस्मि । कथं सा दुर्लभतमा लभ्येति । शिवस्वामी चैवमब्रवीद् — यस्येश्वरः स्वयमाज्ञापयति तस्मै ददाम्यहमिति । तच्छ्रुत्वा स शुकः अहमस्मिन् कर्मण्युपायं जानामीति । महेश्वरायतनं गत्वान्तः प्रविश्य देवस्य पृष्ठतो निलीनः प्राह — भो भो शिवस्वामिन्स्त्वामाज्ञापयामि — सुकथनो वैश्यकुमारः सुतरां मद्भक्तः, तस्मै तव दुहितरं गुणवतीं प्रयच्छ । पुरा मम गणपतिः कस्मिंश्चिदपराधे मच्छापादयोन्यभ इति । तच्छ्रुत्वा परमसम्भ्रान्तः अहो कृतार्थोऽस्मि, अहो प्रसन्नो भगवान् महेश्वर इदानीं मे दुहितुर्जन्मसाफल्यं प्राप्तमिति हृष्टमना देवं प्रणम्य निर्गत्य स्वयमेव धर्मस्वामिगृहं गत्वा तं प्रत्याह — भवता मद्दाथयं भूयतान् । इदानीं मे महेश्वरेण स्वय

मेव कथितम् । अहं नानन्महेश्वरं प्रणतो दण्डवन्नमस्कृत्य निद्रयाक्रान्तः कश्चित् कालं विलम्बितवान् । तत्र मां प्रतिबोध्य देवः सुकथनाय तव दुहितरं देहीत्याज्ञापितवान् । तच्छ्रुत्वा सम्भ्रान्तोऽहमुपागतोऽस्मि । धन्योऽहं तव सम्बन्धादिदानीं तव पुत्राय दुहितरं दास्यामि । शीघ्रं विवाहः क्रियतामिति पुण्ये दिवसे विवाहमकारयत् । शुकोऽपि तद्वृत्तान्तं सर्वं सुकथनाय ब्रवीति स्म । तच्छ्रुत्वा सुकथनः शुकं पूजयित्वा गुणवतीं प्राप्य पूर्णमनोरथो भूत्वा सुखं विजहार । अथ कदाचित् प्रणयकलहाद् गुणवती भर्तारं प्रत्याह किं त्वं श्लाघसे । यदि देवः स्वयं नाज्ञापयेत् कथमहं त्वया लभ्येति । तच्छ्रुत्वा सुकथनः प्रहस्येदमब्रवीत् — अहो मुग्धे ! भ्रान्तासि । देवः कथमस्मादृशैः सम्भाषते । श्रूयतामिदानीमयं शुको देवस्य पृष्ठतो निलीनस्तत् सर्वमब्रवीत् । तच्छ्रुत्वा तव पिता मोहाविष्टो महेश्वरवचनमिति मन्यमानस्त्वामस्माकं दत्तवान् । अद्यापि त्वया विज्ञापितं साधु सम्पन्नमिति परिहसन्नब्रवीत् । ततो गुणवती व्रीडिता च रुष्टा च पितुः सकाशं गत्वा साश्रुपातमकथयत् । तच्छ्रुत्वा पिता निर्विण्णो भूत्वा शुकं प्रति महान्तं कोपमकरोत् । अहो दुरात्मना द्विजाधमेन वञ्चितोऽस्मि । कथं नरम प्रतिकरोमीति विचिन्त्य गृहस्थां शिक्षितां शुकीमाहूयेदमब्रवीत् — एह्येहि शुकाङ्गने ! धर्मस्वामिनः शुकं यथाकथञ्चिदस्मद्गृहं प्रापय । तव वाङ्माधुर्यविलासादिभिः को नाम वञ्चितो न भवेत् । तस्मिन् कार्ये कृते त्वं मम पूज्यमानासीत्युक्ते शुकी तस्य गृहं गत्वा कतिपयदिवसैस्तमात्मवशं चकार । कदाचित् तेन शुकेन सह क्रीडमाना तं प्रत्यवोचत् — कान्त ! कस्मान्मम गृहं नागच्छसीति । शुकः प्राह — त्वत्प्रियं चेदिदानीमेव गच्छामीति तया सह शिवस्वामिनो गृहं प्रविवेश । तं दृष्ट्वा शिवस्वामी गृहीत्वा केशपक्षरोमाण्युत्पाट्य मम शत्रोर्मांसमवश्यं भक्षयामीति पार्श्वस्थं भृत्यं महानसे निक्षिपेत्युक्त्वा निर्गतः । स च तं गृहीत्वा महानसे तस्य भार्यायै प्रादात् । सापि बाढमित्युक्त्वाभ्यन्तरं गत्वा प्रविश्यान्यान्यपि कार्याणि चकार । तत्रान्तरे शुकोऽपि किञ्चन

पुनरन्यो राजात्मनो बहुमतस्य तटाकस्य कञ्चन भृत्यं मत्स्याध्यक्ष-मकरोत्,। स हि नित्यमात्मनो मत्स्यमेकं गृहीत्वा राज्ञो महानसे मत्स्यशतं प्रक्षिपति स्म । ततस्तमपरिरक्षस्य द्वावध्यक्षौ कृतवान् । तावप्यविश्वस्य त्रीन् तानप्यविश्वस्याध्यक्षशतं कृतवान् । ततस्तैस्ते मत्स्या भक्षिताः । तस्यां वाप्यामेकोऽप्यौषधार्थं मत्स्यो न बभूव । पुनरन्यो राजा बभूव । तस्यैका गौरस्ति । स निज तां व्याघ्रभयादभ्यन्तरे निरुध्यारक्षत । सा गौः कृशा बभूव । तद्वीक्ष्य प्रभुभागः श्लोकमवोचत् —

चन्दनवनमतिलोभाऽस्याधानाद् धनस्य कोशाधिः ।
अध्यक्षैक्षपनिकरो गौरप्यतिरक्षणान्नष्टा ॥

ततो विहङ्गा ऊचुः — कमधिकृत्य भवतोक्तमिति । काकः प्रोवाच — एवमेषातिनिर्बन्धरागिणो दानशीला यका इति । यथा मेऽत्यन्तदानशीलत्वात् पूर्वं शुशोच तच्छ्रूयतामिति कथयितुमारब्धः —

अल्पसारोऽपि यो मोहाद् विस्तारं कर्तुमिच्छति ।
पश्चाच्छोचति दुर्बुद्धिर्नालिकेरबको यथा ॥

इत्येवं विचिन्त्य समाभिहितम् (इति ?) दानशीला बका राज्यार्हा न भवन्तीति । ततः कुररा ऊचुः — षण्मासिकं व्रतं ये चातकाश्चरन्ति तेष्वन्यतमाय राज्यं दीयतामिति । कश्चिद्दतिरश्चको नाम काक उत्थायावदत् । तद् व्रतं बिलालव्रतमिति मन्ये । पक्षिणः कथमिति पप्रच्छुः । उवाच काकः —

कश्चिन्मार्जारो मूलफलानि स्वयं पतितानि पत्राणि पुरो निधाया(पृ ?)न्नाभिवृत्त इव पापेभ्यो मूषिकाबिलद्वारे प्रतिवसति स्म तपस्वीव । मूषिकाश्च तं दृष्ट्वा बिलान्निर्गत्य तं प्रदक्षिणीकृत्य प्रतिवसन्ति स्म । स तु मार्जारः सर्वेषां चरमचरं मूषिकं प्रतिदिनं गृहीत्वा भक्षयन् गच्छति स्म कालः । अथ स्वजातिषु क्षीणासु वज्रदन्तो मूषिक उवाच — किमस्माकं निरुपद्रवेण प्रजाः क्षीयन्ते । किमिदानीं मूर्खत्वेन किञ्चिदपि नावबुध्यत इति । अपिचास्मज्जातिशत्रुर्मार्जारोऽस्मद्द्वारसमीपे तपः करोति । यदा तेन तपः प्रारब्धं तदा प्रभृत्यस्माकं प्रजाः क्षीयन्ते निरुपद्रवेण इति । रोमशो नाम मूषिको मार्जारसमीपमगमद् परीक्षणार्थम् । मार्जारश्च रोमशमेकाकिनं दृष्ट्वा तं गृहीत्वा यथाकाममभक्षयत । तस्मिन्ननागतेऽन्याश्चत्वारस्तत्प्रेष्या मूषिका निरगच्छन् । ते च गत्वेतस्ततो विलोक्य रोमशस्यास्थीनि रोमाणि च विष्ठायां दृष्ट्वा ततो गत्वा सर्वेषामवोचन् । तच्छ्रुत्वा सर्वे आगम्य मार्जारमूचुः —

नेदं शीलञ्च धर्मश्च वृत्तिहेतोरिदं तपः ।
न मूलफलभक्षस्य विष्ठा भवति रोमशा ॥

इति । ततस्तं घोषयित्वा विश्वासघातिन् ! पाषण्डिन् ! इत्यप्रियमुक्त्वा मूषिका नष्टं विलद्वारान्तरं जग्मुः । ततो मनुभाषः श्लोकमवोचत् —

यस्य धर्मध्वजो नित्यं सुरध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि मार्जारमिव तं त्यजेत् ॥

तस्मात् तादृशेषु कृतघ्नेषु घातकेषु राज्यं न प्रदातव्यम् । राज्यार्हतां परीक्ष्य निर्णीयतामित्याह काकः ।

तत उलूकसहचरो विषमगिरिगह्वरान्तराश्रयः स्थिरपीनवक्षा नीलकुवलयसदृशनयनो नकुल उत्थायाब्रवीत् — उलूकानामन्यतमाय राज्यं दीयतामिति । ततस्तद्वचनं श्रुत्वा सस्मितं सशिरःकम्पं वाक्चपलो नाम काक उत्थायाब्रवीत् — साधर्म्यं लोकवादः सदृशमस्यन्नियोगी कृतान्त इति । तच्छ्रुत्वा पक्षिणः पप्रच्छुः — कीदृशी कथा लोकवादजामिति । ततः काकः कथयति स्म —

अस्त्युत्तरापथे मथुरा नाम नगरी । तस्या बहिः पूर्वोत्तरस्यां दिशि गोकपिलो नाम ब्राह्मणः शौचाचारसम्पन्नः पुत्रदारदुहितृगोमहिषदासीदासपरिच्छदयुक्तो ब्राह्मणदारकानध्यापयन् प्रतिवसति स्म । चम्पकवकुलपुन्नागसर्जार्जुनकदम्बसहकारपाटलीमाधवीमल्लिकामलयजकुसुमरजोविकीर्णराजमार्गे दक्षिणापथे मधुरा नाम नगरी बभूव । तस्यां नगर्यां चातुर्वर्ण्यपरिचारको विश्वकर्मनामा नापितो बभूव । स कदाचिदन्यनापितं शास्त्रकोविदं गौरवमभिपूज्यमानं दृष्ट्वा भृशमुत्पन्ननिर्वेदस्तस्मात् तदानीमेव नगरान्निरगच्छत् निर्गत्य तु ब्राह्मणवेषोऽचिरेण कालेनोत्तरमथुरां प्राविशत् । तत्र प्रविश्य क नु खलु मयाध्येतव्यमिति सर्वतः परिभ्रमन् अध्ययनपाठकैर्ब्राह्मणदारकैः कृतपरिवारमध्यापयन्तं ब्राह्मणमद्राक्षीत् । दृष्ट्वा च शिष्यवद् विनयेनोपगम्य भगवन्नर्थमभ्यागतमध्यापयितुमर्हसीत्युक्त्वा कृतशुश्रूषणोऽचिरेण कालेन वेदशास्त्रज्ञो बभूव । स कदाचिदुपाध्यायोऽधिगतवेदशास्त्रं सद्बान्धवैः कुलशीलविद्यासम्पन्नैः स्वदारिकां प्रतिपाद्य सर्वान् प्रत्याख्यायायमेव कृत्स्नविद्यया च मत्सदृशो भवतीति तस्मै स्वदुहितरं प्रादात् । एवं गच्छति काले तत्र कदाचिदन्यो दाक्षिणात्यो मधुरायास्तीर्थयात्रानिमित्तं गतो यदृच्छयोत्तरमथुरां प्रविश्य ब्राह्मणानां मध्ये ब्रह्मतेजोधारिणमासीनं सुखासीनं विश्वकर्मसंज्ञं नापितं दृष्ट्वा अहो दक्षिणमधुरावासकदीयो विश्वकर्मनामा नापितश्चातुर्वर्ण्यपरिचारकः स ब्राह्मणः संवृत्त इत्युच्चैरभिधाय यथेष्टं गतवान् । अथ द्विजवचनं वज्रपातसदृशं सर्वेन्द्रियविक्षोभकं निशम्य

मरणे कृतव्यवसाय आसीत् । ब्राह्मणश्च नकुला अहो वञ्चकोऽसीति सन्तर्ज्य परुषमुक्त्वा परित्यज्य गतः । ततस्तं व्रीडितमुखं विषण्णाग्निप्रवेशभृगुपतनादिभिरात्मानं हन्तुकामं जामातरं दृष्ट्वा श्वशुरः पुत्रमौरसमिव हस्ते गृहीत्वाभ्यन्तरं प्रविश्य कुद्दालेनावनितलं खात्वा भूमौ चिरेण निक्षिप्तानि नाविकोपकरणानि दर्शयित्वा मा भूत् खेदस्तव, अन्योन्यसदृशमावयोः कुलमिति व्याचचक्षे । ततो विश्वकर्मा च विगतलज्जः संवृत्तः । तं दृष्ट्वा वसुभागः श्लोकमवोचत्—

नासमानः समानेन बन्धुत्वमुपगच्छति ।
उभौ तौ नाविकौ पश्य दक्षिणोत्तरमाथुरौ ॥

ततो वल्गुलोऽपि स्ववचननिर्वापकं काकवादं श्रुत्वा स्फुरिताधरोष्ठमुखं व्याकृत्याब्रवीत् । रे रे मन्दज्ञान काकाधम! अद्यापि लोके प्रथिताः काका दुष्टा इति । यथासौ दुष्टजम्बुक इति । पक्षिणस्तदुपश्रुत्यान्योन्यं मुखमुद्वीक्ष्य प्रोचुः — काकवल्गुलयोरुत्तरोत्तरकौशलं शृणुम इति । ततः कथमसौ दुष्टजम्बुकस्तत् कथ्यतामिति तं प्रत्यूचुः । ततो वल्गुलः श्रूयतामित्यकथयत्—

अस्ति काम्पिल्या नाम नगरी । तस्या अभ्याशे महत्यटव्यन्तरे व्याघ्रजम्बुकावन्योन्यं सख्यमकुरुताम् । ततो व्याघ्रं राजानं कृत्वा दुष्टजम्बुकोऽमात्यकर्मणि निचरति स्म । अथ कदाचिज्जम्बुको येनकेनाप्युपायेन वञ्चयित्वा व्याघ्रं सर्वान् मृगानहमेव भक्षयिष्यामीति विचिन्त्य व्याघ्रमब्रवीत् — अहमिह यत्किञ्चित् सत्त्वं मृगं वा पशुर्विधत्वायत्त्वत्समीपस्थं करोमि । त्वयात्रैव स्थातव्यमिति । व्याघ्रस्तथेत्युक्त्वा स्थितः । स जम्बुकः गत्वा महारण्यमुद्वीक्ष्य यत्किञ्चन सत्त्वजातं नापश्यत् । ततः क्षुत्क्षामकण्ठो निदाघतृष्णातिबाधितो लम्बितशिरोधरः केनचनमानाकृतिनिर्मितपुञ्जपुराभ्याशे निविष्टश्चिरं मत्स्याशनं न हतं मयेति विचिन्त्य शनैःशनैरगच्छत् । ततो वल्गुलतातरुप्रदेशे मनोहराणि तृणानि चरन्तं रजकनामानमश्वतरमपश्यत् । तं दृष्ट्वा परां प्रीतिमुपगम्यैवमचिन्तयत् । यद्ग्राम्योऽयं पशुरारण्येन मया कथं विश्रब्धो भविष्यतीति । दृश्यते हितविश्रम्भो ब्रह्मचारिण-

शिंशुमारेण वनचारी वानर इत्याश्वसत् । इत्येतच्छ्रुत्वा विहगा ऊचुः — पश्चाच्छ्रोष्यामो जम्बुककथाम् । अथ नीतिमान् बुद्धिसम्पन्नो वानरः जलचारिणा शिंशुमारेण कथं विस्रम्भमुपागमत् । तत् कथ्यताम् । श्रोतुमिच्छामो वयमिति । ततो वल्गुलः सृगालमनोगतमाख्यानं कथयति स्म —

तरङ्गाकुलगम्भीरघोपान्तर्जललीनमकरकूर्मशिंशुमारतिमितिमिङ्गिलाकुलस्य सलिलनिधेर्वेलायामगस्त्याश्रमप्रदेशे शाखाप्रशाखासंचितकल्लोलपल्लवनिरन्तरघनच्छायो मधुरमहाफलोपेत आम्रोऽस्ति । तस्मिन्नेकाकी दीर्घजीविको नाम वानरस्तस्य फलादी प्रतिवसति स्म । तस्याधस्ताच्चिरन्तरपृतिमांसादनोद्विग्नमनाः शिंशुमारो जलादुत्तीर्य वानरभुक्तोज्झितफलानि सर्वाण्याहृत्य स्वयं तत्रैव प्रकामं भक्षयित्वा स्वभार्यायै नित्यमेवोपहरति स्म । कदाचित् शिंशुमारं स्वभावमृदुतरहृदया शिंशुमारी पप्रच्छ — स्वामिन्! ईदृशान्यमृतस्वादुफलानि कुतो लभन्त इति । ततः कर्णरसायनसमारीकृतसंसाररसामृतं प्रेयसीवचनं निशम्य शिंशुमारः शृणु भद्रे! परममित्रमगस्त्याश्रमसमीपे आम्रफलश्री मित्रवत्सलो दयालुः कृतज्ञो वानरोत्तमः । तेन दत्तमेतत् सर्वमित्यकथयत् । ततः कदाचिद् धृतगर्भलक्षणां पाण्डुगण्डमण्डितवदनामापीनस्तनकृष्णायमानचूचुकां सुश्लक्ष्णरोमराजिविराजितमध्यप्रदेशां भार्यां दृष्ट्वा गाढमालिङ्ग्य शिंशुमारः प्राह — भद्रे! प्रकृतिसुन्दरि! विशिष्टमत्रत्रैव दृश्यसे । किं ते दोहदमिति । तच्छ्रुत्वा शिंशुमारी निजकृतघ्नतया क्षीरभावदोषेण चपलतया च पतिं प्रत्याह — तव प्रियमित्रस्य हृदयं बहलमेदुररसं भक्षयितुं मम दोहदम् । तदतिमृदुमधुरफलभक्षणान्मधुरतरमिति मन्ये । तदानयेति । एवं तयोक्तः शिंशुमारस्तादृशं पापं कर्तुं नैच्छत् । सा च तद्लाभसन्तापेन शुष्यच्छरीरयष्टी रात्रिन्दिवं न स्वपिति । ततः स भार्यां मरणे कृतनिश्चयां दृष्ट्वा बन्धुभिर्जनैरपि निषेध्यमानो दयितासन्तापमपनेष्यामीति व्यवसितः । सरभाजनलनिभः सरैदसुधीर्यावदर्दं गत्वा वानरेण समेत्याभाषत् स्वामिन्! ममानुग्रहं कर्तुमिच्छामि

यदि गृहागमनेन प्रसादं कर्तुमर्हसि इति । तच्छ्रुत्वा वानरः प्राह — किमावयोर्निरन्तरसौहार्देन वर्तमानयोर्गृहागमनेन प्रयोजनम् । अपि च महार्णवजले मम गतिर्न विद्यते । तस्मादपि (न) शक्यमिति । शिशुमार आह — यदि स्वामिन्! मामाज्ञापयसि, मम पृष्ठमारोह । भवन्तं सप्तसमुद्रान्तर्द्वीपगतान् विचित्रपल्लवफलशोभितानुद्यानविशेषानपि दर्शयितुं समर्थः । अन्यच्च तत्र भगिनी चिराय सर्वदेवताप्रसङ्गात् सा च मयोक्तैवमाह — यः खलु तव प्रियसखः करुणार्द्रीकृतहृदयः सर्वजन्तुसन्तापं स्वमनुभवमिव मन्यमानो नित्यं मम मधुरफलदाता कश्चिदिति त्वयोक्तः । तद्दर्शनमेव दोहदमित्युक्तवती । सा च सुशीला तवानुग्रहार्हा । मम पृष्ठारोहणं कर्तुमर्हसीति विरचिताञ्जलिरवनितलगतशिरा याचते स्म । ततः स वानरः समुद्भूतकुतूहलोऽनुकम्पया परवशीकृतहृदयः शिशुमारपृष्ठमारुरोह । ततः शिशुमारस्तं गृहीत्वा जलनिधिमवगाह्य प्रयातः । ततो गृहसमीपं गत्वाब्रवीत् — प्रथमोत्पन्नदौहृदया मम भार्यया सखे! तव हृदयभक्षणं काङ्क्षमाणया निर्बध्यमानेन मया सर्वलोकगर्हितमीदृशं कार्यमध्यवसितम् । त्वां हत्वा हृदयमादाय दास्ये त्वयानुमन्यतामिति । ततः स वानरस्तच्छ्रुत्वा विचलितेन्द्रियो धृतिसत्त्वसम्पन्नो ध्यात्वा सुचिरं प्रहस्याब्रवीत् — किं त्वया प्रागेव नाभिहितं, दुर्बुद्धिरसि । प्रागेवं तव न विदितम् । अपि वानराणां हृदयानि शरीरे न भवन्तीति, हस्तावलम्बितान्येव यत्र क्वापि वृक्षाग्रे निक्षिप्य सञ्चरन्ति वानरा इति, किं त्वया न श्रुतपूर्वमिति । शिशुमार आह — हन्त ते कथमिव न दृश्यते इति । वानरः प्राह — प्रागेव क्षुधाभितप्तेन मयामृतरसमयानि भक्षयता शाखावलम्बितं हृदयम् । अन्यैरपि क्षुधाभिभूतैरद्रोढुं समर्थः शाखावलम्बितानि हृदयानि । त्वया न तु ऋक्षा दृष्टा इति श्रुत्वा तथ्यमिति मन्यमानस्तदानयनार्थं वानरं तत्रैव निवृत्य तीरमनयत् । ततो वानरस्तरूपकण्ठभूरुहमालोक्य जलान्तर्गत एव सद्योत्प्लुत्य शाखाग्रमारुह्य प्रहस्येमं श्लोकमपठत् —

न नीचजनसंसर्गमिच्छेत् साधुः समाहितः ।
अहं दुर्बुद्धिना बद्धः स्वबुद्ध्या परिमोचितः ॥

॥

इत्युक्त्वा सुखमवसत् । तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

साधु वानरशार्दूल ! मतिमानसि सर्वथा ।
शिशुमारगृहीतस्य यस्य ते बुद्धिरुत्तमा ॥

बुद्धिसत्त्वसमायुक्तो नरोऽनर्थाद् विमुच्यते ।
यथैव शिशुमारेण हृतो जीवति वानरः ॥

प्रत्युत्पन्नेषु कार्येषु यस्य बुद्धिर्न हीयते ।
स निस्तरति कार्याणि जलमध्ये कपिर्यथा ॥

अनुष्ठितेषु कार्येषु यो गुह्यं न प्रकाशयेत् ।
स तत्र लभते सिद्धिं जलमध्ये कपिर्यथा ॥

स पुनर्जम्बुकोऽब्रवीत् — 'यत्किञ्चिद्बुद्धिसम्पन्नो महान्तमपि निस्तरेदि'ति वचनादपि महाकायमश्वतरं क्षुन्निवर्हणार्थं ममावासं नयामि । आश्रितस्य मम गृहमागच्छत्यश्वतरे स्वयमेव तथापि त्रि-लोकाधिपतिर्नारायणोऽपि वनचारिणा गजेनातिवाहितस्तस्य स्थानं गत्वा वरं दत्त्वा गत इति श्रूयत इति जम्बुको निश्चितवानित्याह वल्गुलः । अथ पक्षिणस्तच्छ्रुत्वा सर्व एवोचुः — सर्वं तावत् तिष्ठतु । सर्वेषा-मस्माकं विस्मयकरमिदमाख्यानं कथ्यतामिति । वल्गुल आह — एतदाख्यानं मया वक्तुमशक्यमिति चिन्तयति स्म । तत्र तत्क्षणेन कश्चिन्महर्षिर्दिवोदासो नाम देवाराधनतत्परस्त्रिकालदर्शी कुशपुष्पस-मिदन्वेषणार्थं चरन् सशिष्यः पक्षिणां वाचोयुक्तिं श्रुत्वा तुष्टस्तत्रैव तस्थौ । तं दृष्ट्वा पक्षिणः प्रोचुः — भगवन् ! अस्माकमप्यनुग्रहः क्रियते चेत् त्वामाश्रितस्यास्य भगवतो नारायणस्य कथां वक्तुमर्हसीति । तच्छ्रुत्वा महर्षिः कृपया वक्तुमारब्धः —

अस्ति खलु पारिजातचम्पकबकुलाशोककुरवककेतकीकदम्बो-दुम्बरजम्बीरजम्बुपुन्नागनागार्जुनमल्लिकालियकसहकारागरुप्रभृतिभिरु-पशोभिततीरप्रदेशं किमपि सरः । देवविद्याधरकिन्नरकिम्पुरुषनागगण-गन्धर्वसद्मप्रदेशस्य यत्रवैडूर्यमरकतहरिन्नीलसुवर्णरजतप्रभाभिः प्रति-दिनमादर्शितपुष्पतनचापलताकारा इव व्यवस्थितस्य केसरिनमरकत-

वृषभमहिषगर्दभगवयहरिणगणैर्विराजितरुचिरप्रदेशस्य स्रवत्तीर्थप्रस्रवणस्य सुमेरुसुतस्य त्रिकूटगिरेस्तत्प्रदेशे पद्मोत्पलसौगन्धिककह्लारकोकनदसमाकुलमतिविशालमत्यगाधं सरः । तस्मिन् सरसि भीमरूपः शिशुमारः प्रतिवसति स्म । सर्वप्राणिनां हन्ता महाबलः । अथ कश्चित् गजोऽनवरतमदस्रुतिजर्जरितकपोलदेशः स्वयूथैरनुगम्यमानः कुलगिरिरिव विराजमानो दिवाकरकरपरितप्तस्तत् सरः प्राविशत् । स तेन ग्राहेण गृहीतो यथाबलं चेष्टते स्म । ततस्तस्य बलेनाभिभूतो निश्चेष्टः परमविष्णुभक्त आक्रोशत् — बुद्ध्याभिवीक्ष्य ममेयमापद् बलवती भवनितरामहो पापमिदं दुस्तरं निस्तरेयमिति परमात्मानं लोकनाथं चराचरगुरुं परं पुरुषं त्रिलोकनाथं भक्तवत्सलमभक्तदुरधिगममचिन्त्यमचिन्त्यकर्माणं भगवन्तं नारायणमनुस्मरति स्म । तत्क्षणेनैव सर्वेषामन्तर्गतश्चिन्तितागतं वैनतेयमारुह्य शङ्खचक्रगदाशार्ङ्गनन्दकैरनुगम्यमानस्तस्य भक्तस्यापदमुज्जिहीर्षुः सत्वरं तत् सरः प्रविश्य शिशुमारकुञ्जरावन्योन्यं युध्यमानाववलोक्य चक्रमुद्यम्य तं ग्राहं विगतासुमकरोत् । ततो गजपतिरपि शिशुमारेण बन्धुभिः सह विष्णुलोकं जगाम ।

> एतदुक्तं मया सर्वमेतत् तथ्यं शुभावहम् ।
> भगवन्तं प्रपन्नोऽस्मि नमो नारायणाय च ॥

इत्युक्त्वा दिवोदासो गच्छति स्म । तद् दृष्ट्वा वसुभागः श्लोकमवोचत् —

> हितं वाप्यहितं वापि यत् कर्म कुरुते नरः ।
> तत् साधुष्वेव कर्तव्यं गजग्राहवदीदृशम् ॥
>
> उभयोरपि निस्मर्तुं शक्तः साधुस्तथापदम् ।
> शत्रोः स्वस्य च निस्तीर्णौ गजग्राहौ यथापदम् ॥

तच्छ्रुत्वा पक्षिणो विस्मिताः सम्भ्रान्तमनसो वल्गुलं प्रेक्ष्य कथाशेषः कथ्यतामित्याहुः । भूयो वल्गुल आह — तस्मात् तिर्यग्योनिषु पृथग्जातीनां च दृश्यते विस्रम्भ इति श्रुत्वा दुष्टः स जम्बुको रजकनामानमश्वतरमुपसृत्य प्रणम्याह — स्वामिन् ! मृगराजस्यामात्यमष्टगुण-

युक्तं नीतिशास्त्रविशारदं बुद्धियुक्तं विद्धि माम् । मृगाधिपतिरप्यात्मवान् कुशलः कल्याणवृत्तिर्वीर्यसत्यधर्मयुक्तस्तादृशैर्भरात्माभिराहतवान् सम्बन्धम् । स मृगपतिस्ते कुशलप्रश्नमावेद्य त्वया सम्बन्धमाकाङ्क्षमाणस्त्वामेवमब्रवीत् — अस्माकं स्थानमिदमतिमृदुलतृणोदकबहुलमतिरमणीयं देवलोकमिव मनुष्यैरगम्यं तदागम्य निवृत्तसर्वारम्भमुखं प्रतिपत्स्यसि । वयं च मारुताहाराः । तदद्यैव गम्यतामित्युक्त्वा प्राञ्जलिर्भूमौ निपपात तस्य पादयोः । ततोऽवनितले पतितं स्कन्धेनोत्थाप्यातितुष्टश्चिरतरं परिचारकजातनिर्वेदो जम्बुकोक्तं सर्वं तथ्यमिति मन्यमान अमात्यवचनान्यकर्तव्यान्यपि करणीयानि । किं पुना राज्ञाम् । गच्छाग्रत इति पुरो गच्छता जम्बुकेन सह प्रायात् । ततो व्याघ्रः सृगालेनायान्तमश्वतरं दृष्ट्वा कृतमनेन कार्यमिति विजृम्भितो दीर्घीकृतोर्ध्वकायो मृगरुधिररञ्जिततीक्ष्णदंष्ट्रः स वदनं विदार्योप्लुत्य ग्रहीतुमुद्यतः । तं दृष्ट्वाश्वतरः —

> आयुष्यं सर्वथा रक्ष्यं प्राणिनामिह धीमता ।
> अप्यल्पगुणसम्पन्नो जीवन् भद्राणि पश्यति ॥

इत्युक्त्वा स्वस्थानाभिमुखो जगाम । तस्मिन् गते जम्बुकोऽपि हा मूर्ख ! धिक् ते मृगपतित्वमित्यादिपरुषवचनैस्तं विगर्हयित्वा शार्दूलम्, इतः परं ग्रहं लब्धुमशक्यमित्युक्त्वा तूष्णीमास्ते । ततस्तं जम्बुकं व्याघ्रो भाषते स्म — मातुल ! भवतिकोऽपराधो मृष्यताम् । अत ऊर्ध्वं न विमोक्ष्यामीति तेनैवं सानुनयमुक्तः सृगालो दुष्टमतिस्त्वरमाणो गत्वा तमुद्विग्नमश्वतरमाहूय बभाषे—धिक् ते जीविताशाम् । मौर्ख्यमिदं कृतं भवता । चिराभिलषितं मित्रं त्वामागच्छन्तं दृष्ट्वा प्रत्यालिङ्गनार्थमसौ वक्षःस्थलं विशालीकृत्याप्लुत्यागतवान् मृगराजस्तपस्वी । तं दृष्ट्वा त्वमतिभीतो गतः । इदानीं किं मम जीवितेन मित्रेणाग्रातरवेति स्नानादिनियमव्रतमपि न करोति । त्वया तेषां परिष्वङ्गप्रकारो न ज्ञातः । नाद्यास्तेषां परिष्वङ्गप्रकारः । तस्य धर्मोनभिज्ञेन त्वया पदार्थीहतोऽहं वाडवपरिष्कृतो ग्राम्य इति वक्तव्यः । इदानीं मम प्राणैः शापितोऽसि आगच्छेति बहुशो दुष्टसृगालेन याचितः स दुर्मतिः पुनरुपनीतः । तमालोक्य पुनरागतं शार्दूलः

किमप्यजानन्निव तूष्णीमास्ते । ततस्तमासन्नमभिवीक्ष्य स्वागतं वक्तुकाम इवास्यं व्यादायालिङ्गनार्थमिव पूर्वकायं विशालीकृत्यापरगात्रेण स्थित्वा नखदंष्ट्रायुधैस्तमश्वतरं प्रगृह्य प्राणैर्वियोजयामास । ततः शार्दूलो जम्बुकमाह — एतस्य वसास्थिचर्ममज्जामेदोमांसानि पृथक् पृथग् विभजस्वेति । एवमुक्त्वा स्वयं वृक्षच्छायाभिमुखो जगाम । ततः सृगालः प्रत्युत्पन्नमतिस्तं विभवस्योत्कृष्य क्रमेण सर्वं विभज्य कर्णौ हृदयं च स्वयं भुक्त्वा श्रान्त इव व्याघ्रमुद्वीक्ष्य तूष्णीमास्ते । ततो मृगाधिपतिरागत्यावयवं समालोक्य कर्णौ हृदयं चादृष्ट्वा तमाह — कर्णौ हृदयं च नापश्यम् । सर्वं मातुलकर्मैतदिति । ततो जम्बुको हस्तेन हस्तं ता(ड्य ? डयित्वा) विहस्याब्रवीत् — अहो राजानो मूढा भवन्तीति लोकवादस्तथ्यं खलु महाराज ! किं न जानीपेऽश्वतरस्य कर्णहृदयौ मृतसमकाल एव विनाशमुपगम्य भक्ष्यमाणे दंष्ट्रान्तरमावसन्तीति(?) । तच्छ्रुत्वा वल्गुभागः श्लोकमवोचत् —

> मृगपक्षिमनुष्येषु धार्ष्ट्यमेव हि शोभते ।
> जम्बुकेनातिधृष्टेन मृगेन्द्रं पश्य वञ्चितम् ॥

एवमेव काकाश्च धृष्टा भवन्तीत्युक्तवान् वल्गुलः । अथापरः काकोऽत्यन्तरोषेण सामर्षं उत्थाय पदानि कानिचिद् गत्वोच्चैर्वल्गुलं प्राह— सर्वलोकविख्यातान् वीर्यवतो गगनोत्प्लवनसमर्थान् काककण्ठीरवान् गर्हयसीति प्रहर्तुकाम उत्पपात । वल्गुलोऽपि तं निर्भरस्यं प्रत्युद्गच्छति स्म । ततो भारतरामायणव्याख्यानकुशलेन गृध्रेण प्रतिनिवारितो यथा सरटयुद्धेन क्षपणकजलत्रासिनामपि विनाशोऽभूत् तद्वदस्माकमपि विनाशो मा भूदिति । ततस्ते तं पप्रच्छुः — कथं तत् कथ्यतामिति । गृध्र आह —

कस्मिंश्चिन्महत्यटव्यन्तरे तटाकमेकं पद्मोत्पलादिभिरलङ्कृतं नानामीनसमाकुलमस्ति । तत्तीरे केचन प्रासादा एकभूमिका द्विभूमिकास्त्रिभूमिकाश्चतुर्भूमिका मण्डपगोपुरमण्डिता विशालभूमिका अन्नपानीयसम्पन्नास्तेषु गहरस्थाः कपटव्रतभागिणः कुण्डिकामण्डितपाणयः केचन क्षपणकाः प्रतिवसन्ति स्म । तत्रानेकविविधपक्षिगणसेवितोऽनेकसरटावासो विविधशाखोपशाखाभिरात्मनोहरो महावटो नाम वनस्पतिरभूत् । तस्मिन् वसतां सरटानां कदाचित् कलहोऽभूत् ।

अन्योन्यदंष्ट्रान् वहन्तः कृकलासा जातटोपोपरक्तनयना व्यादाया-स्यं परस्परं खादयन्ति स्म । ततो दुर्बलः सरटः कलहयातनाभीतः पलायने जातमतिः क गन्तव्यमिति पर्याकुलो गतिमलभमानोऽभूत् । तस्मिस्तटाके दिनकरकरपरितापप्रनिचिकीर्षुर्जलमवगाह्योद्धृतपद्मो-त्पलकुमुदपृष्ठभागमाहृत्य जलं नयतो मदजलकलितजलान् व्यपास्य सर्वतः प्रसारितकरस्य मदोन्मत्तस्य गजपतेर्नासिकारन्ध्रं प्रविष्टः । स मातङ्गोऽपि कृकलासनिवेशदुःखितः शिरःकरौ विधून्वन्नितस्ततः प्रधावन् व्याकुलितेन्द्रियः सर्वानेव जलचरान् स्वगात्रेण चूर्णीकृता-वयवान् कृत्वातिक्षोभेण कर्दमीभूतमहाजलप्रवाहस्तस्मादुत्तीर्य तीर-गतान् क्षपणकप्रामादमण्डपान् महाहस्तनिपातपादपातैश्चूर्णीकृत्य ततोऽप्यनुपरतवेगो धावन् मुहुर्मुहुर्गर्जन् इव नदन् सर्वत्र भ्रान्तः सहसा तं महातरुमपि च गृह्य दन्तमुसलैर्भग्नमूलं पातयित्वा तच्छायागतानि कृकलासकुलानि पातयित्वा पादैर्निहत्य यथाकथञ्चिद्धस्तरन्ध्रनिविष्ट-मपि सरटं विधून्वन् निपत्य गतखेदोऽभूत् । तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

> सरटाः कलहान्नष्टाश्चपलाश्च दिगम्बराः ।
> तस्मात् कलहसंसृष्टान् दूरतः परिवर्जयेत् ॥
> जलजाताः स्थले जाता निहतास्तेन हस्तिना ।
> स रटोऽपि महाशाखः कलहान्निधनं गतः ॥

पुनरन्याश्च कथाः श्रूयन्तामिति गृध्रः कथयितुमारब्धः—

अथ कस्मिंश्चिद् राज्ञोऽन्तःपुरद्वारे युद्धप्रतियुद्धकुशलो मेषः प्रतिवसति स्म । तत्रैव तस्य परिचारकाः प्रतिवसन्ति स्म । स मेषः सर्वदा राजभवनं गन्तुमागन्तुञ्च निर्जयप्रवेशनपरा-न्प्राणिनस्तादयन् प्रचरति स्म । स च सर्वदा राजपार्श्वस्थितां दासीभिर्या पीड्यमानः शिरसा ताडयितुमारब्ध इत्यादरदर्शयति इति तं हन्तुकामा कदाचिद् गत्वा निर्गच्छन्ती दासीभिः करतालिकाभिर्या मेष प्रजघान । तत उल्काभिः क्षणेन तस्मिन् निपतितो मज्जाल ।

स मेषोऽग्निदाहविवशो दूरतरकोपाच्च पाशं छित्वा तां दासिकां पृष्ठे चोरसि पार्श्वे भृशमुन्ममाथ । तेन ताडिता सा निपत्योत्थाय क्रोशमाना प्रधावति स्म । मेषोऽपि वेदनार्तः परिभ्रमन्नितस्ततः उष्णनिर्वापणपरो राज्ञो वाजिमन्दुरां प्रविवेश । तद्दहनो मन्दुरां ददाह । राजप्रधानाश्च केचित् सत्वरं भयाद् दाहसंभ्रमात् पाशान् विमुच्य जवेन धावन्ति स्म । स्तोकदग्धाः केचित् तत्रैव विलपमाना निधनं गताः । ततो राजा सर्वानाहूयाग्निं शमयति स्म । तस्मिन् प्रशान्ते हयानां चिकित्सार्थं सर्वानेव भिषजो राजाब्रवीत् — एतेषां वेदनोपशमनोपायं कुरुध्वमिति । ते च भिषजो राजानं प्रत्यूचुः — यदि राजन् ! कपीनां चर्माणि वसाश्च विद्यन्ते तैः शक्यते वेदनां शमयितुं नान्यथेति । ततो नरेन्द्रस्तच्छ्रुत्वा भृत्यानाज्ञापयति स्म । यत्र यत्र कपयो विद्यन्ते तत्र तत्र गत्वा तान् हत्वा चर्माणि वसाश्चानयन्त्विति । ततस्ते सर्वं उद्यानं गत्वा कपीन् हत्वा चर्माणि वसाश्चानयन् । ततस्ताभिः कपिचर्मवसाभिरश्वभिषजोऽश्वान् स्वस्थानकुर्वन् । अथ कपीनामत्यन्तविनाशं दृष्ट्वा वसुभागः श्लोकमवोचत् ॥

दासीमेषविरोधेन वानरा निधनं गताः ।
तस्मात् कलहसंयुक्तान् दूरतः परिवर्जयेत् ॥

अतो मधुकुम्भभेदकलहोत्पत्तश्च श्रूयताम् —

अस्ति गङ्गायमुनयोर्मध्ये पुरूरवसाधिष्ठितं प्रतिष्ठानं नाम नगरम् । तस्मिन् सर्वौषधिरत्नक्रयविक्रयवणिग्जनाकुलेऽन्तरापणे कश्चिद् ग्रामवासी दारुभारोद्वहनस्फुटितकिणीकृतस्कन्धदेशो मलिनवसनः मलापन्नकुलोऽश्वाजिरथान्तरे रथ्याकुले शिरस्यावलम्बितेन घटेन मधुपूर्णेनान्यत्र निरीक्षमाणः प्रास्खलत् । स्खलितपादे च तस्मिन् घटं पतितं दृष्ट्वा नागरिका श्लोकमपठन् —

क्षेत्रे गृहे च मननं किल वर्धितस्य
गोभिः समं गलितयौवनविभ्रमस्य ।
वेश्याङ्गनागृहसभासु बहिष्कृतस्य
ग्रामेयकस्य ललितानि सुदारुणानि ॥

इति । ततस्तस्मिन् भिन्नघटप्रदेशे मधुपानलोलुपा मक्षिकाभ्यपतत् । कश्चिज्जालकृमिः पृष्ठावलम्बितेन सूत्रेण निपपात । अथ जालकृमिं दृष्ट्वा कुड्यादवतीर्य गृहगौलिका शनैश्शनैरुपससाद । ततस्तां गृहगौलिकां दृष्ट्वा सङ्कुचितकरचरणकायः प्रस्पन्दमानसितदीर्घस्वपुच्छाग्रं सञ्चालयन् मार्जार उपससाद । अथ तत्र राज्ञः श्वगणिकस्य श्वा मृगबन्धग्रहणकुशलो मार्जारमभ्यगात् । ततो मार्जारं हन्तुकामं श्वानं दृष्ट्वा मार्जारस्वामी वणिक् श्वगणिकाधिपमब्रवीत् । यदि मार्जारं दंशयसि अद्यैव वैवस्वतं द्रक्ष्यसि तव श्वेति यष्टिमुद्यम्यास्ते । श्वगणिकाधिपश्च यदि मम श्वानमसावपि हन्तुमागच्छेत् तदन्तरे निमेषमात्रेणास्य शिरश्छेत्स्यामीति खड्गमुद्यम्याध्यतिष्ठत् । ततः शनैरुपेत्य जालकृमिर्मक्षिकामग्रहीत् । कृमिं गृहगौलिकाग्रसत् तस्मिन्नवसरे गृहगौलिकां मार्जारोऽप्यदंशत् । मार्जारं श्वापि समदंशत् । श्वानमपि वणिग् यष्ट्या जघान । श्वगणिकाधिपतिश्च तद्घातिनं खड्गेनापातयत् । तं वणिजं पतितं दृष्ट्वा नागरिकाः सर्वे श्वगणिकाधिपतिमवधिषुः । ततः श्वगणिकाधिपतिं हतं श्रुत्वा राजातीव रुष्टो नागरिकान् सर्वान् हत्वा बद्ध्वागच्छेति स्वसैन्यमाज्ञापयत् । तच्छ्रुत्वा नागरिकाः सर्वे योद्धुं पिण्डीभूता बभूवुः । अथ महासैन्यं च व्यूढवान् स्वामी । अथ व्यूहशब्दभेरीपणवपटहसिंहनादरिकृतशब्दान् विसृजन्तः शरनाराचार्पणतोमरभिण्डिपालमुसलमुद्गलचक्रवल्लपान परशुशूलादीनुभये प्रववर्षुः । ततो रथनेमिखुरोद्धूतरेण्वन्धकारे मांसमज्जारुधिरकर्दमे मदमातङ्गघर्षाट्टहासनिर्जितास्तस्मिन् युद्धेऽल्पेनैव कालेनोभयबलपुरुषाः सर्व एव निधनं गताः । तं दृष्ट्वा वसुभागः श्लोकमरोचत् —

अतिक्रोधो न कर्तव्यः कोपो भवति नाशनः ।
यथा गजनगरी नष्टा स्नेहेन मधुबिन्दुना ॥

निर्जिताः कोपवेगेण मानेन च मदेन च ।
नाशं प्रयान्ति सहसा व्याघ्रनागरिपा यथा ॥

विनाशितं क्षणेनैव नानाजनसमाकुलम् ।
प्रतिष्ठानं सुखस्थानमेकेन मधुबिन्दुना ॥

एवमस्माकमपि विनाशो मा भूदिति वल्गुलिकाऽपक्षपातिनः सन्नद्धा मया निवारिता इत्युक्त्वा गृध्रो विरराम ।

तस्मिन् सुखनिषण्णे पक्षिणां समूहे मा मलपनेत्युत्थाय शुकपोत आह पण्डितको नाम सर्वजनमनोहरविद्रुमनिभतुण्डः । मृदुमारुतोद्धूतमञ्जरीकृतचामरस्य तपनीयकर्णिकारवटवेष्टितस्य निरन्तरावबद्धघनकुरवककुड्मलावदानश्मश्रुस्य नानाकारतरुकुसुममकरन्दास्वादनमदमुदितकलरवनिगलितवनदेवताचरणयुगलमधुकरपङ्क्तिवृन्दस्य देवस्य वसन्तस्य दूतभूतानां कोकिलानामन्यतमाय राज्यं दीयताम् । तच्छ्रुत्वा चण्डतुण्डो नाम काक उत्थाय प्रायेण नीचाः कृतघ्नाश्च कोकिलाः । तेभ्यो राज्यं न प्रदातव्यमित्यब्रवीत् — यथा श्वा च मृगराज्यं प्राप्य सिंहत्वान्मुक्तः स्वां प्रकृतिं गत इति । ततः सर्व एव पतत्रिणस्तां कथां पप्रच्छुः । काकः कथयति स्म —

अस्ति विदेहो नाम जनपदः । तस्मिन् दाक्षिणाग्न्यो नाम ग्रामः । तत्र चैको निषादो मृगमांसोपजीवी प्रतिवसति स्म । स कदाचिद् दिवाकरकरनिकरनिर्दग्धमर्मरायमाणद्रुमगुल्मतृणं दुःसहगभस्तिमन्दग्धजलाशयवनमृगतृष्णिका(म?)नुचरन्मृगकुलं ग्रीष्मकाले बहुभिः श्वभिः परिवृतो मृगयार्थमरण्यं प्रविश्य चरन् दवाग्निभयचकिताज्ञातिविक्लवान् बहुमृगाञ्छरेण हत्वा निवृत्तः । तत्रैकः श्वा गौरवर्णो निदाघतृष्णावेदनापरिपीडितः काञ्चिच्छायामधिगम्य स्वपतस्य स्वेलितशब्दं न बुबोध । शुनां वृन्दात् परिभ्रष्टमनागतं तमज्ञात्वा स निषादो गतः । अथ श्वा चापराह्णे प्रतिबुद्धो निर्गतश्च यूथं सर्वतः परिभ्रम्यादृष्ट्वा कर्तव्यतामूढो भूत्वैतस्ततः परिभ्रमन् मार्गमेकमुपलभ्य तेन मार्गेण दूरमध्यानं गत्वा विविधतरुनिकरकुसुमफलरुचिरमतिधार्मिकस्य सर्वप्राणिनोऽनुकम्पमानस्य प्रतिनियमजपहोमस्वाध्याययुक्तस्यातिथिपूजाव्रतस्य शापानुग्रहसमर्थस्य दीर्घतपसो गौतमस्याश्रमपदं परमरम्यं ददर्श । तत्रानेकविधपुष्पजालसुगन्धजलसम्पूर्णं गौतमतीर्थं नाम सरो ददर्श । तदुदकमास्वाद्य विगतश्रमो भूत्वा

तत्रैवास्ते । अथ तत्रैनासीनो महर्षिर्गौतमोऽपि तं दृष्ट्वानुगृह्य तस्मै फलानि प्रायच्छत् । तथा गच्छति काले महर्षिस्तं श्वानं स्वाश्रमे निवासमनुकम्पया किमर्थमपवित्ररूप इहास्ते । मदनुग्रहेण सुमङ्गलो भवस्विति तं कृष्णमृगमकरोत् । तथा गच्छति काले महर्षिरभ्यागतेनातिभयङ्करेण व्याघ्रेण विद्राव्यमाणं दृष्ट्वा अहो अयं मृगो मया कृतोपकारः सर्वेषां श्वापदानामाहारभूतस्तेभ्यो बिभेति । अथ सर्वश्वापदमृगाधिपो व्याघ्रो भूत्वा सर्वान् मृगान् परिभर्त्सयन् शार्दूलो भवस्विति तं शार्दूलमकरोत् । सोऽपि सर्वान् मृगान् परिभर्त्सयंश्चरति स्म । अथ कदाचिदाश्रमपार्श्वे सिंहः स्वनखकुलिशविदलितकरिपतिकटितटविगलितशोणितारुणसटाकलाप आमिषार्थी वननिर्झरगिरिप्रदेशान् परिभ्रमञ्छार्दूलं ददर्श । तं दृष्ट्वा विजृम्भमाण आस्यं व्यादायाद्रवत् । भयचकितं शार्दूलमतिरभसादागच्छन्तं सिंहं च दृष्ट्वा महर्षिः सर्वश्वापदानां सिंहो बलवानिति ज्ञात्वायमपि सिंहो भवस्विति तं सिंहमकरोत् । ततः सिंहो भूत्वाश्रमे प्रतिवसति स्म । ततो हिमवत्सुतान् महाकुलीनान् सिंहानुपागम्याब्रवीत् — मम विषयाद् गच्छताथवा कन्याविवाहसम्बन्धेन जीवतेति । तच्छ्रुत्वा सर्व एव हरयो विचार्य प्रोचुः — जामातृभावेन त्वां गृह्णीमः । अस्मिन् हिमवत्पार्श्वेऽदृष्टपूर्वो भवान् । तस्मात् पृच्छामो वयं मातापित्रोस्तवान्वयमिति । तैरेवमुक्तश्चिरं ध्यात्वा सोऽब्रवीत् — अगस्त्याश्रमे गुणी मुनिर्गौतमस्तिष्ठति । सोऽस्माकं नामधेयं कुलं च कथयिष्यति । तं पृच्छध्वमिति । तच्छ्रुत्वा हरयः प्रोचुः — अहो युक्तमुदाहृतं, युष्माकं गोत्रं च कुलं च यदि गौतमो ज्ञास्यति गुणी स एवास्माकमपि प्रमाणमिति । ते सर्व एव कृतकसिंहेन सह जग्मुः । ततः कृतकसिंहो ध्यायदिदानीं गौतमः सत्यवादित्वेन ख्यातः पृष्टः सत्यं निवेदयिष्यति चेत् तं हन्यामिति निश्चित्य जगाम । स मुनिस्तं जिघांसुमायान्तं ज्ञानदृष्ट्या विलोकयन् जगाद —

त्वं नीचकुलसम्भूतः कृतघ्नो दुर्बलाशयः ।
वर्जयामसि मामेव तत् पुनः श्वा भविष्यसि ॥
व्याघ्रत्वं च मृगत्वं च सिंहत्वं च मया कृतम् ।
अकृतज्ञो दुराचारः पतितः श्वा भविष्यसि ॥

स पुनः शापात् विलुप्तलोमच्छदमुक्तिकाच्छन्नो निकृतदेहः श्वानो भूत्वा धूलिधूसरो विरसस्वरं विक्रोशन् परिभ्रमति स्म । तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

> दुर्जनः सत्कृतो वापि स्फीतां श्रियमवाप्य वा ।
> स्वामिन्येवापकुरुते यथा श्वा गुणिनोत्तमे ॥

तथैव कृतघ्नाः कोकिला राज्यार्हा न भवन्तीत्युक्त्वा विरराम काकः ।

अथ तस्यामेव सभायां बलाहकः कश्चिदुत्थायाह — मृदुपदविलासविन्यासानां शङ्खेन्दुकुन्दवपुषां कुरराणामन्यतमाय राज्यं दीयताम् । ततस्तद्वचनमसहमानस्तीव्ररोषो नाम काकः उत्थायोच्चैर्बलाहकमुद्दिश्याह — अहो निर्लज्जास्ते स्त्रीस्वभावाः कुररा राज्यार्हा न भवन्तीति । तदा तस्य वचनं सर्वजनविद्वेषकरमतिनिष्ठुरं निशम्य चकोर उत्थाय गुरुरिव शिष्यं विनयमानः काकमित्युवाच — किमिदं कर्णशूलभूतं वचनमविमृश्य पूर्वापरमतिरोषेण शरीरमनुरथेन भाषसे, त्वमतिरोषेण विनाशं गमिष्यसि, यथातिरोषेणापरीक्ष्य क्षुभितेन्द्रियमना ब्राह्मणीति । ततश्चकोरं विहगा ऊचुः — कथमतिरोषेण ब्राह्मणी पश्चात्तापेन नष्टेति । चकोरः कथयति स्म —

अस्ति मिथिला नाम नगरी । तस्या अभ्याशे ब्राह्मणाधिष्ठितो मूलफलसमित्कुशोपेतो भद्रवटो नाम ग्रामः । तत्र चाग्रहारे षट्कर्मनिरतः कपिलो नाम ब्राह्मणः प्रतिवसति स्म । तस्मिन् ग्रामाभ्याशे गुल्मस्यान्योपरि लोहितमणिसदृश आयतो निर्मलास्यदर्शनो हरिलोहितनीललोमच्छन्नशरीरो नकुलोनकोऽभूत् । स गुल्मादुत्साहारार्थं कृमिकीटदंशकान्वेषणो ग्रामस्याचारी तत्र ब्राह्मणैरस्माकं (गृहाः) सर्वतरीसुपदूषिता न भविष्यन्ति । अपि सर्वमेव यत्नभाण्डमनुच्छिष्टं भविष्यतीति मत्वा ब्राह्मणीभिरप्यनन्यासिर्वचमानः स्वगुल्मनिखष्टस्वास्थ्यप्रीतिं प्रतिपद्यमानः स्वकण्ठात् पाशं स्वयमेव विगलय्य निरभरेण ब्राह्मणानामेवगृहाणां मध्ये स्वासने सर्वं चचार । स तत्र च परिभ्राम्यन् ब्राह्मणस्य परां प्रीतिमुपागमत् । साधवेन मूषिकसर्पादुपद्रवो न जातु भविष्यति । अपि

च सर्वमेव सुभाण्डादिकमनुच्छिष्टं भविष्यतीति । अथ तत्रायं हविर्भोजनेऽवशिष्टं हविस्तस्मै ददाति स्म । तेनैव नकुलो निर्भयो निर्विशङ्को विस्रम्भमगमत् । अथ ब्राह्मणो नकुलेन पुत्रवानिव परिहृष्ट आवयोः पुत्रानुभवरसोऽस्तीति ब्राह्मणीमुवाच । एवं गच्छति काले कदाचिदृतुगामिनो ब्राह्मणस्य पत्नी दैवेन गर्भमुवाह । सा च कालेन प्रसूते स्म । अथ तस्मिन् वर्धमाने दारके मातापित्रोः सम्पूर्णमनोरथयोर्गच्छति कालः । कदाचिद् ब्राह्मण्यां केनचित् कारणेन बहिर्गतायां तस्मिन्नेव मार्गशीर्षमासान्त उत्तरायणकाले प्रतिवेशिको नाम श्रेष्ठी परिपक्वनित्यकर्मरतो धर्मपरायणस्तं ब्राह्मणं प्राञ्जलिरुपेत्य स्वामिन्! प्रतिग्रहार्थं मम निलयानुगमनेन ममानुग्रहं कर्तुमर्हसीत्याह। अथ ब्राह्मणो विचारयन् काकतालीयमिव ब्राह्मण्या निर्गमनप्रतिग्रहोत्सादनमभूत् । दारकस्य रक्षणं न दृश्यते । उद्यतस्य प्रत्याख्याने नरको भविष्यति । इत्थं विचिन्त्य नरकभीरुः स्वसमीपवर्तिनं नकुलपोतमाह — वत्स ! नकुलश्रेष्ठ ! कीटसरीसृपमूषिकादिभ्यो भ्राता ते कनीयांस्त्वया परिपालनीय इति । इत्थं दारकरक्षणार्थं नकुलं व्यादिश्य वणिजा सह निरगमत् । नकुलश्च दारकसमीपे पर्यटति स्म । अथ तस्मिन्नेव काले कश्चित् कृष्णसर्प आमिषान्वेषणार्थी गृहस्योपरि चरन्तं मूषिकमवेक्ष्य धावति स्म । मूषिकोऽपि भयाद् भूमौ निपत्य समन्तात् परिधावन् सुप्तस्य ब्राह्मणदारकस्य पर्यङ्कसमीपे बिलमासाद्य प्राविशत् । ततस्तमनुसृत्य मूषिकमन्वेक्षमाणः सर्पो नकुलस्य पुरतो बभूव । तस्योत्पन्नवैरी नकुलपोतस्तं भुजङ्गमं दृष्ट्वा विरक्तनयनः सहसोपसृत्य परितो भुजङ्गमस्य धावन् व्याकुलीकृत्य वज्रसदृशतीक्ष्णदंष्ट्रैः खण्डयित्वा विगतासुमकरोत् । अथ भुजगरुधिरार्द्रचरणमुखनखाग्रः समवस्थितश्च । बलीयान् हतो भुजङ्गमो मया युद्धं कृत्वेति श्लाघनीयमात्मनः कर्म निवेदयितुकामो द्वारस्तम्भमाश्रित्य तत्रैव तस्थौ । अथ वायसः कृतान्तवशान्मृतस्य श्मशानभूम्यामुज्झितस्य शिशुकस्य जम्बुकगणखण्डितस्य छिन्नपादाङ्गुलीशकलमादाय तत्र स्तम्भोपरि निषद्य भक्षयति स्म । तस्य मुखात् परिभ्रष्टः मांसांशः पादाङ्गुलिशकलो नकुलस्य पार्श्वे न्यपतत् । अथ

तस्मिन्नवसरे बहिर्गता ब्राह्मणी प्रत्यागत्य द्वारदेशे प्रसुप्तं नकुलं रुधिरार्द्रातिरक्तचरणनखाग्रं दृष्ट्वा तत्पार्श्वे साङ्गुलीयकं शिशुचरणाङ्गुलिशकलं च निरीक्ष्यात्मनो दारकस्येति मन्यमाना अहो नकुलेन मत्कुलोच्छेदः कृत इति दुःखात् चञ्चलत्सर्वेन्द्रिया क्रोधान्धा भूत्वा दुरात्मना तिर्यग्योनिनानेन दुष्कृतं कृतमिति स्वहस्तावलम्बितेन खदिरमुसलेन प्रसुप्तं नकुलं प्राणैर्वियोजयामास । अथ ब्राह्मण्यन्तर्गृहं प्रविश्य रुधिरसिक्तभूमिभागे शकलीकृत्य राशीभूतमहिं ददर्श । तत आत्मनश्च दारकं पर्यङ्कगतं हस्ताभ्यां पादाङ्गुष्ठं वक्रे कृत्वा पीतमपि पूर्वचरितं सञ्चिन्त्यैव स्मयमानं दृष्ट्वा विह्वलीभूतसर्वेन्द्रिया मूर्च्छितामभवत् । कथञ्चित् प्रतिबुद्धा ततो ब्राह्मणी स्वसाहसं दृष्ट्वा हाहेति मोहमुपागम्य पुनः पुनरपि घोरेण कर्मणा भृशं विनिन्द्यात्मानं लोकगर्हितं कर्मापि विनिन्द्य पुनरपि नकुलं परामर्शेन निपातितं दृष्ट्वा भूमौ निपत्य पश्चात्तापेन तप्यमाना पापकारिण्या मया कृतमीदृशं कर्म दृष्ट्वा किं करिष्यति मम स्वामीति भयेन च विमोहमुपगता पुनरप्युत्थाय स्वामिनो भीत्या सर्पं विनिक्षिप्य रुधिराक्तं भूमिं प्रक्षाल्य गोमयेन च विलिप्य पूर्वमिव स्थिता । अथ ब्राह्मणः स्नात्वाग्निहोत्रोपकरणान्याहृत्य गृहं प्रत्यागतवान् । ततः स पादौ प्रक्षाल्य देवतार्चनवैश्वदेवबलिहरणाद्याह्निकं कृत्वा भोक्तुमुपक्रान्तो नकुलपोतकमाह्वयेति ब्राह्मणीमुक्तवान् । तच्छ्रुत्वा ब्राह्मणी चाङ्गुलीर्विभज्य भयचलिता ब्रवीति स्म । भोक्तव्यं भवद्भिः, उपागच्छत्येव नकुलपोतक इति । तां ब्राह्मणोऽब्रवीत् । तमदृष्ट्वा प्राणाहुतीर्न करोमि, शीघ्रमुपानयेत्युक्त्वा किन्त्विदानीमन्यथैव दृश्यसे । तथ्यं ब्रूहीत्युक्तवान् । सापि यथायथं सर्वमकथयत् । अथ ब्राह्मणः श्रोत्रे पिधाय हा हा कष्टमुभयलोकगर्हितं संवृत्तमिति बहुधा विलप्योद्वृत्य एतन्महापातकप्रक्षालनार्थं भागीरथीं प्रवेक्ष्यामीति निर्गतः । ब्राह्मणी तु दारकमादाय तस्य पुरतः सप्रणामा भूमौ निपत्य स्वामिन्! अहमपि तवानुगमनं करिष्यामीत्याह । तच्छ्रुत्वा सोऽपि हस्तौ विधूय महापातकिनि! तव मुखालोकनजिहीर्षया मया गम्यते । किं मां त्वमपि हंसीति प्रत्याख्याय गन्तुमुद्युक्तः । ततः साहं मरिष्ये । तत्र

दारकः किं करिष्यतीत्युक्त्वा प्रणनाम । ततो ब्राह्मणः करुणार्द्री-
कृतहृदयो भूत्वा श्लोकमिमं लिखित्वा सहस्रकनकदायिने ददस्वे-
त्युक्त्वा गतवान् । ततो ब्राह्मण्यपि कतिपयदिवसैः पश्चात्तापं शोकं
चापनीय लिखितश्लोकपत्रं गृहीत्वा अत्यापणं श्लोकविक्रयार्थमहमा-
गता, तद् ग्रहीतुं किमपि वाञ्छाऽस्तीति पृच्छन्ती पर्ययासीत् । तत्र
केचनोन्मत्तेयं प्रलपतीति केचन तूष्णीं स्थिताः । केचन कियदस्य
मूल्यमिति पृच्छन्ति । केचन विहस्य गच्छेत्यब्रुवन् । ब्राह्मण्यपि वि-
मुखा यान्ती काञ्चनाधिकृतसकलकलाकलापमार्जितमिव विविधधन-
राशिं जितमकरध्वजरूपकान्तिं नियमितसकलेन्द्रियमतिसुकुमारं षोडश-
वर्षदेशीयं सायांत्रिकयुवानं ददर्श । शनैः शनैस्तमुपसृत्य वत्स ! श्लो-
कविक्रयार्थमहमागता । भवतो वाञ्छा किं विद्यते इमं परिग्रहीतुमिति
पर्यपृच्छत् । सोऽपि तत् पत्रमादाय श्लोकमुवाच । ततः कियन्मूल्य-
मस्येत्युक्तवान् । सा चाब्रवीत्—सुवर्णसहस्रदायिनेऽमुं श्लोकं ददस्वेति
स्वामिनोक्ता । तदेव जानामीति । स तु युवा मनसि स्त्रीत्वादियं
चास्य मूल्यं न जानात्यधिकमूल्येन भवितव्यमिति विचिन्त्य तप्त-
जाम्बूनदसहस्रं तस्यै दत्त्वा श्लोकमग्रहीत् । तत्पत्रं शयनस्थानोपरि
पट्टिकायामवलम्बितवान् । ततः प्रभृति प्रतिदिनमुत्थाय तत्पत्रगतं वाच-
यित्वा तदर्थं मनसि ध्यायन्नेव सर्वकार्याणि परीक्ष्य कुर्वंस्तस्य भू-
यान् लाभोऽभवत् । एवं गच्छति काले कदाचिदस्य पित्रा सांयात्रि-
केण अल्पात्प्रागमार्जितविविधानेकधनपूरितमहापोतपतिनैषदूनषोडश-
वर्षेण प्रतिनिवृत्तस्ततो वेलासमीपे सर्वान् पोतान् प्रतिष्ठाप्य तेनेति
परिचिन्तितम्—मम गमनकाले भार्या चान्तर्वत्नी सुतं प्रसोष्यति ।
तत् पुत्रमुखारविन्दावलोकनामृतरसपानसुखानुभवभाग्यं मम किं भविष्यति
न वा इति । तावता कालेन पुत्रोऽप्युपतिपरिणतो भवेत् । अथ चा-
श्रिते नरेन्द्रनन्दनाथनिशानरीधाजुर्दीनामल्पयौवनानामेकैकमपि म-
द्पारदं निपुणं मधुपायः यत्र वसति । तदपि युवतिजनमन्मेति च ।
अन्यच्च —

विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ।

इति पुराविदो वदन्ति । तत् किं भविष्यतीति । सा चेदानीं किं कुर्वती कीदृग्भूतेति विज्ञातव्यमिति मनसि कृत्वा स्वयमेकाकी निशीथे निजवेश्म केनापि प्रकारेण प्रविश्य तत्रातिमनोहरविशालपर्यङ्किकालङ्कृते उभयपार्श्वनिवेशितकनकदीपिकाकाण्डोज्ज्वलप्रदीपप्रदेशे पुत्रेण सह शयानां भार्यामपश्यत् । ततः कोऽयं युवानयाः शेत इति सञ्जातरोषः क्षुरिकामुद्गृह्यामुं हत्वा पुनरेनां हनिष्यामीति तत्समीपमुपागमत् । ततो ललाटे विघट्टितं तत्र लम्बितं पत्रमालोक्य किमिदमिति दीपे पत्रमवाचयत् —

> अपरीक्ष्य न कर्तव्यं कर्तव्यं सुपरीक्षितम् ।
> पश्चाद् भवति सन्तापो ब्राह्मणी नकुले यथा ॥

इति । तर्हि परीक्ष्यैव करिष्यामीति क्षुरिकां सकोशां कृत्वा स्वभार्यामबोधयत् । सापि स्वकान्तमायान्तमात्मनः प्रियाणि वदन्तं पार्श्वस्थमेव पश्यन्ती सरभसमुद्विग्नेवोदतिष्ठत् । ततः सत्वरमवतीर्य सविस्मयं तं प्रणम्य सुतमपि विप्रबोध्य तव पितरं नमस्कुर्वित्यादिदेश । सोऽपि पादावुपसृत्य भूतलस्पृष्टललाटतटं प्रणनाम । ततः पोतवणिगप्यात्मजमालिङ्ग्याघ्राय च मूर्ध्न्यवघ्राय चानर्गलनिर्गलत्सखेदानन्दाश्रुप्रवाहेण तं सिञ्चति स्म । ततः शय्यायां मुहूर्तं तूर्ष्णीं स्थित्वा तमात्मजं लिखितश्लोकमिदं पत्रं केन दत्तं केनावलम्बितमिति पर्यपृच्छत् । सोऽपि सविनयमाह—स्वामिंस्तात ! कयाचिद् द्विजयोषया सहस्रजाम्बूनदमूल्यं दत्तमिदं क्रीत्वावलम्बितं मयेति । तच्छ्रुत्वेदानीं तां ब्राह्मणीमाहूय पुनरपि तावत् तप्तजाम्बूनदं दद्स्वेति तेनैवादापयत् । एतज्ज्ञानात् पूर्वापरं कार्यमनवेक्ष्यकारी विनाशमुपगच्छतीति मया निवारितः काक इति चकोरोऽब्रवीत् । तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

> यस्तु कार्यमविज्ञाय क्रोधान्धो मारयेन्नरः ।
> स तु त्यजति मित्राणि ब्राह्मणी नकुलं यथा ॥
> विचारयित्वा कर्तव्यं त्वं निहन्त्यविचारिनम् ।
> ब्राह्मणी नकुलं हत्वा पश्चात्तापेन तापिता ॥

अथ तस्मिन् पक्षिसमूहे चक्रवाक उत्थाय काकाय राज्यं दास्यन्तु भवन्त इत्युक्तवान् । ततो वल्गुलस्तं प्रत्यभाषत — कथं भवता· विचार्याभिहितम् । काकाः क्रूरोपायज्ञाः पापकर्माणः । यथा काकै· रुलूका दग्धाः तथा विनाशो मा भूदिति । अथ पतत्रिणः प्राहुः कथं काकैरुलूका दग्धा इति । वल्गुलः प्राह —

अस्ति विपुलेऽरण्ये गहने बहुमृगश्वापदसमाकुलो महापर्वतः । तस्य गुहायामुलूका बहवः प्रतिवसन्ति स्म । ततः समाजं कृत्वा काकास्तत्र जग्मुः । अथ तत्र गुहाद्वारे स्थित्वा ब्रुवन्ति स्म — कोऽत्र भोः प्रतिवसतीति । तच्छ्रुत्वा कश्चिदुलूकोऽब्रवीत् वयमुलूका इति । अथ काका ब्रुवते — शृण्वन्तु भवन्तो यूयं वयं च केनचिन्नियताः कञ्चित् कालं वर्तयिष्यामः । अथोलूकाः प्रोचुः—कथं नियमो नामेति । काकाः प्रोचुः — भवद्भिर्वयं रात्रौ न भक्ष्याः अस्माभिर्दिवा भवन्त इति । एवमेवेति सर्वे तुण्डैर्दारूणि गृहीत्वा शीतनिवारणार्थं द्वार· मावृत्य गुहायां सह निवसन्ति स्म । ततः कदाचित् काका गुहा-द्वारावरणकाष्ठनिचयेऽग्निं प्रक्षिप्य स्वमालयं जग्मुः । गुहान्तर्गता उलूकाः सर्व एव बाला वृद्धाश्च दग्धाः । तं दृष्ट्वा (वसुभागः श्लोक-मवोचत् —)

न विश्वसेत् पूर्वविरोधि(न)स्तु शत्रोः पुनर्मित्रमुपागतस्य ।
दग्धां गुहां पश्य दिवान्धपूर्णां काकप्रणीतेन हुताशनेन ॥

एवं काका दुष्टा उलूकानामिवास्माकमपि नाशो मा भूदिति । ततः सर्वे पक्षिणः प्रोचुः — अस्माकमन्योन्यकथाश्रवणेन कालातिक्रमो मा भूत् । इदानीमेकं प्रधानमभिजनसम्पन्नं नीतिशास्त्रविशारदं वेद-शास्त्रेतिहासपुराणविदं वीर्यबलसम्पन्नं धैर्ययुक्तं कार्याकार्यकोविदं कारुणिकं धर्मशास्त्रविशारदं धनधान्यसमृद्धं त्यागिनमविप्रपन्नविक्रान्त-मर्यादं जितेन्द्रियं पितृवत् परिपालकं सर्वेषां मित्रवद् विश्वसनीयं शिष्ट-जनपक्षपातिनं पतनप्रपतननिपतनोत्पतनायतन्यायतप्रपतनसम्पतन-धावनसमर्थं सर्वगुणसम्पन्नं पक्षिराजं कृत्वानेन परिपालिताः सर्वे वयं प्रनिवसाम इति । इत्थं यस्मिन् सर्वे गुणा इति बहुशो विचार्य ते गरुडे सर्वगुणाः सन्तीति सम्प्रधार्य तस्याभिषेकार्थं तदालयं जग्मुः । ततस्तमासाद्य

सर्वे सम्भृतसम्भारा भगवन्तं गरुडं भद्रासने विधिवदुपवेश्य पुण्य-
दिवसे सर्वदेवानां मध्ये व्यासवसिष्ठतुम्बुरुनारदकाश्यपदक्षसनकसन-
न्दनसनत्कुमारसनातनादिभिर्ब्रह्मर्षिभिरभिषेचयित्वा सर्वपतत्रिणा
मयमिन्द्र इति नमस्कृत्य द्विजानर्चयित्वा रम्भामेनकाद्यप्सरोगणैरन्यैश्च
सिद्धगन्धर्वविद्याधरैर्नृत्तगेयादिना तुम्बुरुनारदकिन्नरादिकृतवीणि-
तस्य वैनतेयस्य नानाविधनवमहारत्नैरलङ्कृतं द्वादशादित्यसमूहमिव
विराजमानं विश्वकर्मणा सद्यो निर्मितं मकुटमनुपमं तस्य शिरसि
विनिक्षिप्य कर्णपूरकेयूरहारवलयकटिसूत्रोदरबन्धनूपुरादिभिराभरण-
मुख्यैरनेकरत्नरचितैर्जाम्बूनदमयैरलङ्कृत्य स्वस्ति नोऽस्त्वित्युक्त्वा
स्वामिनानुज्ञाताः स्वं स्वं वासं पक्षिणो जग्मुः ॥

इति तन्त्रोपाख्याने पक्षिप्रकरणं समाप्तम् ॥

---

आसीदतिकुसुमभारावनतशाखोपशोभितैरनिललोलपल्लवदुकूला-
लङ्कृतलतालिङ्गितैर्निजकुसुमामोदमत्तमधुपाङ्गनामर्दितमनोहरैः कुन्द-
मन्दारचन्दनचम्पकाशोकपुन्नागकुटजपाटलीवकुलसहकारकुरवकतिल-
कतालनागपुन्नागकर्णिकारप्रभृतिभिरनेकपादपैराकुला निशितनिज-
नखदलितकरिकरटगलगलितरुधिरजलपाटलितवदनया सन्ध्याराग-
रञ्जितपयोधरनिकरायमाणैः केसरिशतैरधिष्ठिता राजधानीव महीधरो-
पशोभिता स्नानभूमिरिव सिंहासनाध्यासितकृष्णदेहा समुद्रवेलेव नाग-
शताध्यासिनी गिरिराजसुतेव दर्शितनीलकण्ठपदा सुभगपरिपाटीव मदना-
धोपशोभिता काचिन्महत्यटवी । तस्यां कस्मिंश्चिद् गिरिकन्दरे
दीर्घनिःश्वासनिष्पेषोत्क्षिप्तकाननः कश्चिन्महानागोऽधिवसति स्म । स
कदाचिदनावृष्ट्या निखिलेऽस्मिन् कानने परिशुष्यति पतत्रिमृगगणा-
वत्सु समस्तसत्त्वेषु पिपासाभिभूतोऽतिकष्टां दशामापन्नो जलान्वे-
षणार्थं शनैः शनैरुपसर्पन्नत्यगाधमच्छस्फटिकनिभजलपरिपूर्णमनेक-
वर्णोपलसम्पर्कविविधवर्णैर्मण्डूकशतैरध्युषितमासन्नं सरो ददर्श ।

ततस्तमुपसृत्य समन्ततो विलोक्य तज्जलावलोकमात्राद् दाहश्रममपनयामीति विचिन्त्यान्यत्र गत्वा यथाभिमतमाहारमुपभुज्य तत्तीरेऽहरहः प्रतिवसति स्म । एवं गच्छति काले किञ्चिद् विगतश्रमश्चैतज्जलाभ्यन्तरं प्रविश्य पातुमलभमानोऽपि । एतत्कूपनिवासिनां सर्वेषां मण्डूकानामधिपो महागजो नाम दर्दुरस्त्वभितः स्तुतिचतुरैर्निजभुजपरिपालितैः प्रतिदिनमभिवन्द्यमानस्तान् सर्वानभ्यन्तरे निपत्य दिवा परिपालयन् रात्रौ तत्तीरमारुह्य स्वपिति । एवं गच्छत्सु कतिपयदिनेषु कस्याञ्चिन्निशि तत्तीरोपशयितं नागं दृष्ट्वा भयाविष्टहृदयः को भवानत्र शेत इत्युक्त्वाद्यप्रभृतीयं महत्यापद् प्राप्ता । वयं क्वास्म(हे) । छिद्रान्वेषणपरो वसतीत्येवमादि चिन्तयन्निमं श्लोकमवोचत् —

> रौद्रया वीक्षिते दृष्ट्या कौटिल्यचरिते मृदु ।
> क्रूरे हि भवनं प्राप्ते तद् गृहं न शुभं भवेत् ॥

तच्छ्रुत्वा सञ्जातभयेषु तेषु कृष्णाभिधानो मण्डूकस्तानवोचत् —

पुरा किल विद्याधरलोके रजतगिरिशिखरमलङ्कुर्वतो भगवतस्त्र्यम्बकस्य सर्वेषु विद्याधरेषु प्रतिसंवत्सरं महोत्सवं कुर्वत्सु तद्दर्शनोत्सुकतया विद्याधराः सर्वे निजवनिताभिः सह महोत्सवदर्शनसुखं प्रतिसंवत्सरमनुभवन्ति स्म । एवं गच्छति काले कदाचित् सम्प्राप्ते महोत्सवे कस्मिंश्चित् संवत्सरे काचिद् विद्याधरी गर्भिण्यभवत् । तां च महोत्सवदर्शनाय गन्तुमशक्तां सञ्जातकुतूहलां खिन्नामवलोक्य तत्प्रेम्णा विरहमसहमानो भद्रे ! अहमपि न गमिष्यामीति प्रत्याह विद्याधरः । एवमभिहिता तेन विद्याधरी त्वं च न गमिष्यसि चेदहमवश्यं द्रक्ष्यामि । यावदहं महोत्सवं दृष्ट्वागमिष्यामि तावदिमं गर्भं धत्स्वेत्यवोचत् । तच्छ्रुत्वा विद्याधरश्च तत्प्रेम्णानुरक्तचित्तः कामम्पस्तथेत्युक्त्वा गर्भं धत्ते । सा च विगतगर्भभरक्लेशाभिसुभगाकृतिर्निर्भरोत्सवदिदृक्षयान्यैर्विद्याधरैः सह जगाम । एवं प्रस्थितायां तस्यां गतेषु कतिपयदिनेषु संवर्धितगर्भो विद्याधरो दुर्भरगर्भाक्रान्तशरीरः

सञ्जातदुःखोऽतिकष्टां दशामापन्नः । सा त्विह सुखासीनाहं न पुनर्गर्भलीलामनुभवितुमुत्सहे । सम्यग् जानामि प्रसवव्यसनमित्येवमादि चिन्तयन्ती निवृत्तागमना यथाभिमतेन विद्याधरेणान्येन यूना सह विषयसुखमनुभवन्ती तं देशं नागच्छत । विद्याधरश्च परिपूर्णमासेन तेन गर्भेण प्रसूतिपथमलभमानेन निष्पीड्यमानस्तां वेदनां सोढुमशक्तो ममार । तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

दाक्षिण्यं कुरुते योऽसौ दाक्षिण्येन विनश्यति ।
अतिदाक्षिण्यदोषेण यक्षो भवति गर्भवान् ॥

एवं दाक्षिण्यान्मत्स्वामी चास्य विषोरगस्य प्रतिश्रयं दास्यति चेद् दृढमस्मत्कुलविनाशो भविष्यतीत्युक्त्वा विरराम । एवं गच्छति काले कदाचित् स दुष्टोरगस्तस्मिन् कूपतीरे सुखासीनं महागजमुपागम्य सोपचारमुवाच । स्वामिन् ! अस्मिन् विमलजलपरिपूर्णे सुखं जीवसि । अहमतिदाहाभिभूतो न जीवामि । तद् भवानभ्यन्तर प्रवेशोपायेन रक्षितुमर्हति । इतः परं विमुक्तरोषो युष्माभिः सहैव जीवामि । न कदाचिदप्यपराधमाचरिष्ये इत्युक्तवति तस्मिन् महागजः स इमं श्लोकं निजगाद—

सर्पाः क्रूरा महादोषा मन्त्रौषधवशानुगाः ।
नहि खलधर्मे शान्तिस्तस्मात् त्याज्या विषोरगाः ॥

एवं जातिकौटिल्यं निरीक्ष्य किञ्चिदाशङ्के । अथाप्यावयोः प्रेमसम्बन्धो भविष्यतीति सर्वे मण्डूकाश्चिन्तयन्ति । अहमपि किमत्र कर्तव्यमिति व्याकुलहृदयस्तर्कयामीत्युक्तवान् । तच्छ्रुत्वा दुष्टसर्पस्त्वं हि लोभाद् वदसि । लोभवतां सर्वथा विनाशो दृश्यत इति । कथं लोभवतां विनाश इति गजेन पृष्टो दुष्टसर्पः कथयितुमारब्धः —

कदाचित् कुञ्जरपतिर्नाम राजा मद्रपदाधिपेन राज्ञा सह कलहायमानोऽतितुमुलं संग्रामं चकार । तावपि निशितनिस्त्रिंशप्रहारविधनाभ्यां शरनिकरोत्कृत्तगजरथतुरगपदाती संममर्द(त ? तुः) । ततः कश्चिज्जम्बुकस्तस्यां युद्धभूमौ निपतितगजरथतुरगपदातिवर्गमवि-

समीक्ष्य सन्तुष्टमनाश्चैतर्हि मम चिरकालस्याहारो निर्वृत्तः । न हीमानद्य भक्षयामि । इदानीमेतच्चापाग्रकोटिनिबद्धं वार्ध्रकं भक्षयामीति तच्चर्म ददंश । ततो दशनान्तर्लग्नवार्ध्रेकमुत्पाटयितुमसमर्थो ममार । तं दृष्ट्वा वसुभागः श्लोकमवोचत्—

अतिलोभो न कर्तव्यः कर्तव्यस्तु प्रमाणतः ।
अतिलोभजदोषेण जम्बुको निधनं गतः ॥

एवं लोभवतामवश्यं विनाशो भविष्यतीतीदृशमन्यदपि पुरावृत्तमाख्यानं श्रूयतां तावत् —

पुरा किल कश्चिद् वनेचरो विविधतरुनिकरनिरन्तरं वनमहिषविषाणकोटिनिष्पाटितमृगकुलक्षतक्षरितरुधिरबिन्दुसिक्ताभ्यन्तरमगाधपल्वलबिलकर्दममर्दनदर्पितवराहयूथनिर्घोषभीषणं क्वचिद् विराटनगरमिव कीचकशतैः, क्वचित् पुरुहूतशरीरमिव सहस्रनेत्रैः, क्वचित् कैलासशिखरमिव प्रवृत्तनीलकण्ठविलासैः, क्वचिद् राजनगरमिवोच्चसालमण्डलैः, क्वचिदनङ्गवपुरिव मदनशिखरैर्विराजमानं महदटव्यन्तरं प्रविश्यामिषान्वेषणार्थं पर्यटन् किञ्चित् करटतटपरिगलितमदजलामोदनिपतितमधुपकुलपटलावतितीर्षया कटपटं विटपिषु विघट्टयन्तं मातङ्गमेकाकिनं दृष्ट्वा कश्चिद् वल्मीकाग्रं सरभसमारुह्याकर्णपूर्णं धनुराकृष्य तस्य मस्तके मार्गणं निचखान । ततः स तेनाभिहतमस्तकोऽतिगम्भीरं नादयन् भूमौ निपपात । अथ तमतिभयङ्करं गजभणादं श्रुत्वा भ्रान्तचित्तो महानागस्तस्माद् वल्मीकाग्रान्निर्गत्य तस्य पादे ददंश । ततस्तं वनेचरः क्षुरिकामुत्पाट्य द्विधा छित्त्वा विषाभिभूतचेता विगतासुरभूत् । तदा कश्चिज्जम्बुकस्तान् विगतप्राणानभिसमीक्ष्य प्रहृष्टश्चैतानि श्वः प्रभृत्यनेकदिनेषु (भ? भो)क्ष्ये । अथ तावद् धनुष्कोटिलग्नं चर्म (भ? भो)क्ष्यामीति विचिन्त्येमं श्लोकमवोचत् —

षण्मासस्य भवेन्नागः सप्तरात्रस्य मानवः ।
एकरात्रस्य सर्पः स्यादद्य (भ? भो)क्ष्याम्यहं धनुः ॥

एवमुक्त्वा धनुष्कोटिलग्नां चर्मरज्जुं निचखाद । ततस्तेनोच्छिन्नगुणेन धनुर्दण्डेनाभिहतमस्तको ममार । एवं मोहयतां विपत्तिरेव दृष्टा । तस्मान्मोहं मा कृथाः । अपिचैतदप्याख्यानं पुरावृत्तं श्रूयतां तावत् —

अस्ति समस्तदिग्धास्तिमस्तकन्यस्तविसृतयशोंशुभिरनेकविद्यानवद्यैर्धर्मैकनिरतैर्निजरूपविलासापहसितमन्मथैः स्ववृत्तवृत्तैः पौरैरधिष्ठिता हिमालयविशालसालमण्डलावृता, गोपुरशिखरोपरि कल्पितनीलोपलप्रभान्धकारितदिगन्तरा, मलयानिलोच्चालितध्वजपटोल्लिह्यमानजलधरपटलैरलघुमणिनिकररचितोपरिस्थलतया गगनपथगमनश्रममपनेतुमिव निषण्णस्य तिग्मरुचेर्बिम्बं बिभ्रद्भिर्लीलाविलोलविलासिनीजनविश्लथितचिकुरभारच्युतकुसुमनिकरमभिन्नपङ्क्तिः प्रतप्तजाम्बूनदोपरि कल्पितवातायनविवरैरत्यन्तरमणीयैस्तत्प्रभोत्सारितमिवान्धकारमगरुचन्दनवह्लधूमपटलमुद्वहद्भिः प्रासादसहस्रैः सङ्कुला, मल्लिकालिङ्गितचन्दनप्रमुखानेकविटपिनिविडैरुन्निद्रपुष्पमकरन्दपानमत्तमधुकरषण्डमण्डितमाधवीमण्डपान्तः शिखण्डिताण्डवमनोहरैः कुमुदकुवलयकह्लारकमलनीलोत्पलकलिकालङ्कृतसरोविशेषरम्यैरनङ्गोत्सवपुराङ्गनारब्धसङ्गीतमनोहरैरुपवनैरावृता राजधान्युज्जयिनी नाम । तस्यां कश्चनार्थश्रेष्ठी धनश्रेष्ठिना वणिजा सह सख्यमकरोत् । तयोरतिलब्धस्नेहयोर्गच्छति काले तावप्यनेककोटिशतमायसपिण्डं सम्भृत्य कस्मिंश्चिद् यानपात्रे निक्षिप्य केचिन्नावावभिरुह्य जिनाभिधानद्वीपान्तरमुपजग्मतुः । प्राप्तसागरमध्ययोरन्यतरं कश्चिद् विषमानिलो(ना)ऽपा सार्थमुज्जयिनीमुपानयत् । अपरं जिनाभिधद्वीपान्तरं प्रापयत् । सोऽर्थश्रेष्ठी भूयोऽप्युज्जयिनीं प्राप्यातिसन्तप्यमानहृदयः स्वभवनं प्राप्य पुरा क्षिप्तधनशेषमाहृत्य वाणिज्यं वितन्वन् पुत्रैः सह कथञ्चिज्जीवति स्म । धनश्रेष्ठी च विषमानिलप्रदर्शितमार्गो जिनं प्रविश्यायसपिण्डान्यनेकसुवर्णभारस्य क्रीणन् सुवर्णभारान् कृत्वा तैर्यानपात्राणि परिपूर्य भूयोऽप्युज्जयिनीं रात्रौ प्रविवेश । अथ मध्यरात्रे निजभवनं प्रविश्यान्यैरविज्ञायमानस्ताश्रेष्टका यत्र कचित् क्षिप्तवान् । ततः कपटदरिद्रवेषं जीर्णवासोवसानमतीव दुःखार्तमासीनं दृष्ट्वा सर्वे कुत्र गतो भवानतिकृशोऽभवदित्यन्वकम्पयन् । अर्थश्रेष्ठी च तदागमनं श्रुत्वा सम्भ्रममुपागम्य तं दृष्ट्वानिगाढमालिङ्ग्यानेदुःखहृदयश्चिरमश्रूणि विमुच्य नूनमिदमावयोः पुराकृतं पापकर्म तदेव पर्यपृच्छत् । यदावयोर्जीवितं लब्धम् । किं बहुना, कुत्र भवान् प्रक्षिप्तवान् मालवः ।

कस्मादिदानीमागतोऽसि, कथं वागतवानत्र भवान् । किं कृतवा-
नायसपिण्डानीति पर्यपृच्छत् । स चानेन पृष्टो व्यादिश्य तस्य सुत-
मानयध्वमिति स्वभृत्यान् प्रेषयामास । ततस्ते धनश्रेष्ठिभवनं प्रविश्य
तस्मै तथैवाशशंसुः । धनश्रेष्ठी च तच्छ्रुत्वा(गतं) स्वपुत्रमाहूयैनमादाय
गच्छतेत्यादिदेश । तमादायागम्यार्थश्रेष्ठिने समदर्शयत् । स च तमा-
दाय निजगृहाभ्यन्तरं प्रविश्य गुप्तमुपवेश्यान्वेषणार्थमागतान् नहि
वयं तं पश्याम इत्यूचे इति निजगृहजनानादिश्यानतशिराश्चातिदुःखित
इव वस्त्रेण मुखमावृत्य निषसाद । ततः क्षणे गते धनश्रेष्ठी भृत्यान्
पुत्रमादायागच्छतेत्युक्तवान् । ततस्ते तद्गृहं गत्वास्मत्स्वामिनो भो-
जनवेला वर्तते । स च पुत्रागमनमीक्षमाणस्तिष्ठति क्व वत्स इति
तद्गृहजनानपृच्छत् । तच्छ्रुत्वा किञ्चिदप्यनुक्त्वा शयितवानर्थश्रेष्ठी ।
ततो धनश्रेष्ठिभृत्याः स्वस्वामिसकाशं सरभसमुपागम्य स्वामिंस्तत्र
पुत्रं न पश्यामः । अर्थश्रेष्ठी किञ्चिन्नानुभाषत इत्याचचक्षिरे । तच्छ्रुत्वा
ससम्भ्रममुत्थाय मित्रकलत्रादिभिरनुगम्यमानो हस्तावुत्तमाङ्गे निधाय
विलपंस्तद्गृहमुपगम्य वस्त्रप्रच्छादितमुखमवाक्शिरसमर्थश्रेष्ठिनं दृष्ट्वा
मम पुत्रं दर्शय । कासीनः, किं कृतवानसि । अहो किमापतितमित्य-
पृच्छत् । ततोऽर्थश्रेष्ठी कथञ्चित् सव्रीडं मुखमुत्क्षिप्य पुत्रं मया सह
भुञ्जानं कश्चिन्मार्जारः शिरसि ताडयित्वा तमुद्धृत्य समधावदिति
माह । तच्छ्रुत्वा पापिष्ठ! निष्करुण! किं कृतवानसि मम चित्तहारि
पुत्ररत्नम् । भवन्तः शृणुतासाधुक्तभाषणम् । शक्तः किल विडालः पुत्रं
हर्तुं, किं त्वमेव हतवान् । त्वामधुना राज्ञे निवेद्य बन्धयामीति
निष्क्रम्य राजभवनं प्राप्य राजानं दृष्ट्वा व्यजिज्ञपत् । देव! मम
पुत्रं हत्वा विडालेनापहृत इति मिथ्यावददर्थश्रेष्ठी । तमाहूय प्रभुरर्हे-
नीति । अथ नरपतिस्तदा स्थापयित्वार्थश्रेष्ठिनमाहूय किं कृत-
वानस्य धनश्रेष्ठिनः पुत्रः, कथमेतत् सम्भाव्यमिति रहसि पृष्टवति राज्ञि
स चिरमुक्तवानर्थश्रेष्ठी । देव! आत्मनो बहूनि वस्तूनि नौषु सम्भृत्य
लाभालाभं समयमनुसरिष्यामि इत्युक्त्वा शपथं कृत्वा देशान्तरं गत्वा
गृहं विक्रीय तदा मणिभारं मां रक्षितवान् स्वयमेव जग्राहेति । तच्छ्रुत्वा

तमन्यत्र स्थापयित्वा धनश्रेष्ठिनमाहूय कथमेतत् प्रवृत्तम् । त्वमस्य वस्तुजातमादाय देशान्तरं गत्वा वाणिज्यलब्धं धनमेनं वञ्चयित्वा त्वमेव गृहीतवानसि किमिति पृष्टवान् राजा । सोऽपि निजगाद — देव ! तत् सत्यं, पापात् किन्तु न लब्धं धनम् । यथावृत्तं श्रूयतां तावत् । आवयोः सर्वस्वं विक्रीयायसपिण्डान् सुगृह्य कस्मिंश्चिन् यानपात्रे निक्षिप्य व्यापारनिमित्तं देशान्तरं गत्वा कस्मिंश्चिद् वणिग्गेहे चैतानि निक्षिप्तवानस्मि । अथ तान्यायसानि तद्गृहवासिनो मूषिकाः सर्वेऽप्यपिबन् । ततश्चाहारमात्रमप्यलभमान आगतोऽस्मि । तच्छ्रुत्वा राजा किञ्चिद् विहस्याब्रवीत् । एतदेवं न स्यात् । सर्वं तस्मै दास्यतीति तमन्यत्र स्थापयित्वार्थश्रेष्ठिनमाहूय तद्वस्तुजातं मूषिकैर्भक्षितमित्युक्तवानेषः । कथं तावन्मार्जारः पुत्रं हर्तुं शक्नोतीति निजगाद । तच्छ्रुत्वार्थश्रेष्ठी विहस्येदमब्रवीत् —

शठस्य गत्वा शठतां प्रतीकारं शठो व्रजेत् ।
आयसं ह्याखुभिर्भुक्तं बिडालेन हृतः सुतः ॥

देव ! युक्तं किं धनस्वामिनस्तस्य वचनं, शक्ताः किमायसं मूषिका भक्षयितुं, बिडालोऽपि शक्त एव पुत्रमुद्धर्तुम् । किं बहुना, स गाढं निर्भर्त्स्यैवं प्रष्टव्य इति । राजा तु साध्वभिहितं भवता । ममैव प्रज्ञापराध इत्युक्त्वा धनश्रेष्ठिनमाहूय पुरतो निवेशयित्वा कोपादतिरक्तनयनः स एवमवादीत् । ध्रुवमनृतवादिनं त्वां वधिष्ये । यथावृत्तं कथयेति । ततः स कोपोद्धतभ्रुकुटिललाटमवलोक्य नृपतिं यदि सत्यं न वक्ष्यामि ध्रुवमयं वधिष्यतीति मत्वा प्रकम्पमानसर्वावयवो गद्गदयागेवमुक्तवान् धनश्रेष्ठी — देव ! मोहात् तथोक्तं मया । आवयोरायसभारं विक्रीय देशान्तरादुपनीतमनेकं स्वर्णं गृहे निक्षिप्तमस्ति । तत् सर्वं दास्यामि । पाहि मामित्यभिवन्द्य सानुकम्पमवोचत् । तच्छ्रुत्वा राजा प्रहस्यैनमनृतभाषिणमकरुणं दुष्टहृदयं मत्पुरतो बहिर्निनीयास्य सर्वस्वमर्थश्रेष्ठिन एव दापयतेति पुरुषान् व्यादिदेश । अर्थश्रेष्ठी च — तदर्थमेवालं मम । तस्यैवापरं दातव्यम् । प्रसीद । कोपं मुञ्चतु स्वामीत्यवोचत् । राजा तु प्रहृष्टहृदयः — अहो साध्वभिहितं भवता । धर्मिष्ठोऽर्थश्रेष्ठी । तथा कुरुध्वमित्याज्ञप्तवान् । धनश्रेष्ठी च तत् सर्वं धनं

विभज्य तस्यार्धं ददौ । अथार्थश्रेष्ठी च तद् धनमादाय तस्य पुत्रं दत्त्वा विमुक्तमत्सरस्तेन सुखं जीवति स्म । अत एवं मोहवतां विपदेव भविष्यति । तस्मान्मोहं मुक्त्वा ममाप्येतज्जलदानेन बान्धवैः सार्धं रक्षितुमर्हसीत्याह नागः । पुनरप्याह दुष्टोरगः । तव विश्वावसोरिव नृपतेरतिलोभाद् विनाशो मा भूदिति । तच्छ्रुत्वा कथमतिलोभाद् विश्वावसुर्विनष्ट इत्यपृच्छन्महागजः । सोऽप्यस्ति चेत् कुतूहलं श्रूयतां तर्हीत्यारब्धवान् वक्तुम्—

आस्ति सिन्धुविषयाधिपतिर्निजभुजचलितनिखिलारातिमहीपालाचलो विश्वावसुर्नाम क्षमापालः । तस्य चन्द्रसूर्याविव दशाशावेक्षितयशोंशुशुभ्रीकृतविश्वविश्वम्भराचक्रौ चक्रधरविक्रमौ विश्वावसुकश्मीरनामानौ पुत्रौ बभूवतुः । स कदाचिद् वयःपरिणामादुपनतं यमलोकं विज्ञाय तौ निजसुतानन्दकरावाहूय स्वराज्यधुरं समं विभज्य युवाभ्यां चिरं जीवतां(?) महीभार इति समादिश्य स्वर्लोकमगात् । ततस्तावपि कृताभिषेकौ राज्यधुरं समं विभज्य समुद्वहतः । एवं तयोर्निर्गतिविषयभूमिमनुभवतोर्गच्छति काले कदाचिद् विश्वावसुरहो ममार्धराज्यमनेन भुज्यते । कथं मयि जीवति राज्यार्हः कनीयान् । केनोपायेनेमं इत्येदमात्मसात्करिष्ये । व्यक्तं चेद्धनिष्यामि सुमहान् परिवाद इति विचिन्त्य कश्मीरं प्रति कृतसंरम्भो विदिताभिप्रायं समीपवर्तिनं प्रधानमन्त्रिणं सुमुखनामानमवलोक्य आहूयतां वत्सकश्मीरश्चिरविरहादतिवर्धते कौतूहलमित्यादिदेश । ततः सुमुखस्तथेत्युक्त्वा कञ्चित् कञ्चुकिनमाहूय शीघ्रं राजाज्ञयानीयतां कश्मीर इति प्रेषयामास । ततस्तूर्णं गत्वा कश्मीरगृहं प्राप्य तत्कालोचिताचारं तं दृष्ट्वा महीतले निहितमस्तकोऽलिरभिनन्द्य सविनयं विज्ञापयामास । देवदर्शनकुतूहलः स्वामी विश्वावसुः, तदाज्ञया देवानयनार्थं सुमुखेन प्रेषितोऽस्मि । तच्छ्रुत्वा तत्स्वच्छबुद्धिर्गुरोराज्ञा, भवतु गच्छाम इत्युक्त्वा गगनभ्रमसुन्दरानीयतामश्व इति सरभसोपनीतमश्वमारुह्य प्रस्थातुमारब्धवान् कश्मीरः । तदा तस्योपरि उदयगिरिशिखरमारुह्य परिणतगगनाङ्गनस्य श्रियमुद्वहन् म्रियमाणधेनातपत्रविभवः समवालक्ष्यत । तस्य पुरतो नागर्भानमकरनिकरचित्रा सुकुन्दकरार-

विन्ध्याक्रान्तमन्दरगिरिनिर्मथितपयोदधिफेनपटलमुपाण्डुरकल्लोललक्ष्मीः पताका, ततो बलारातिहृत्क्षोभं दुर्नेत्रनागततद्गमनपिशुनः शङ्खः, स्वपक्षरक्षणनिमित्तं शरणागताः सम्यानसेनोत्तनाः कनकगिरिमिव महीभुनमं परिवारयाञ्चक्रुः । ततस्तैरवनिपालैः सह स्वभवनान्निष्क्रम्य राजमार्गाभिमुखो बभूव । ततो निपततां सौधवातायनविवरनिर्गतानां पुरसुन्दरीजननयनशराणामेकलक्ष्योऽनेककुवलयच्छविना चक्षुषा निखिलमिव जनहृदयमनुरञ्जयन् निजाग्रजभवनमाससाद । ततस्तुरगादवतीर्य सरभसप्रसारितं कञ्चुकिनः करमवलम्ब्य तत्रैमोचितजनपरिवृतो भ्रातृसकाशमविशत् । अथ दूरादेवागच्छन्तं दृष्ट्वा मिथ्याम्प्रश्रयमभिव्यञ्जयन्नुदतिष्ठद् विश्वानसुः । कश्मीरस्तं दृष्ट्वा कृतार्थः खल्वयं जनो यदस्मत्स्वामी सम्मानयत्येनमित्यभिवन्द्य तच्चरणनखनिकरमुकुरोदरेषु निजमुखप्रतिबिम्बानि पश्यन्नेवानेक इव तस्मै प्रणामं चकार । स चैनं गाढमालिङ्ग्यार्धासन समारोप्यात्रायोत्समाङ्गे कुशलं पप्रच्छ । देव! कथं स्वल्पकुशलं नु भवेद् तत्र कुशलिन एव कनीयस इत्युक्तवन्तं कश्मीरमन्तः प्रविश्य गृहजन आलोक्यतामित्यादिदेश । तथेत्युक्त्वा गिरिगुहामिव केसरी गृहाभ्यन्तरं प्राविशत् कश्मीरः । तस्मिन् गतेऽहो निर्मर्यादः खलु राजलक्ष्म्याः पक्षपात इत्यन्तर्ज्वलदीर्ष्यानलेन दह्यमानहृदयो यथाभिमतेन विनोदेन दिवसशेषमनयत् । अथागतायां तु शर्वर्यां प्रभात एव तुरगखुररवमुखरितगिरिगह्वरविवरचटुलभटजनोरःकवाटनिहितमणिपाटलितविटपिनिबिडमृगगणनिःशेषतदशनाङ्कुशदशाय कश्मीरेण सार्धं मृगयाभिलाषया वनमविशत् । अथ तावपि महज्जवाश्वारूढौ मृगान्वेषणार्थमितस्ततः प्रधावन्तौ कञ्चिद् वराहमतिरभसमुच्चरन्तं दृष्ट्वा जिघांसया सैन्यमपास्यातिदूरमुत्पेततुः । ततो विश्वानसुः कुटिलहृदयः परितो विलोक्य निर्मनुष्यं वनान्तरं पश्यन्नयमवसरः प्राप्त इति विचिन्त्य तत्क्षणं मृगमासन्नमुपगम्य तज्जिघांसुरिव कश्मीरमवधीत् । ततोऽप्रतिनिवर्त्य समन्ताद् विलोकयंस्तत्समीपवर्तिनीं काञ्चित् तरुशाखां

तथैवापतितम् । धिग् जीवितेन परिवादैकभाजनेन । अहं न जीवामीति स्वयमात्मानं हत्वा विश्वावसुर्ममार । तं दृष्ट्वा वसुभागः श्लोकमवोचत् —

भृत्यवैरं समुत्पन्नमिति निश्चित्य नीचवत् ।
विश्वावसुर्नृपः स्वेन दुःखेन मरणं गतः ॥

तस्मादतिलोभो न कर्तव्यो ममाप्येतत्कूपप्रवेशोपायेनागतेन जलदानेना(नु)गृहाणेत्युक्तवन्तं दुष्टसर्पं प्रत्यभाषत महागजः । सखे! साध्वभिहितं भवता, अद्यप्रभृति ममाप्यतिलोभो न कर्तव्य इति । तच्छ्रुत्वा कूपवासिनो मण्डूकाः सर्वे हन्त स्ववशतामनयत् स्वामिनं दुष्टोरगः । इतःप्रभृति किं बहुना अस्माकमुपागतः खलु विनाशकाल इति तत्रसुः । एवमन्योन्यं प्रवृद्धस्नेहयोर्गच्छति काले कस्मिंश्चिद् दिवसे पिपासाकुलं दुष्टोरगं दृष्ट्वा सञ्जातकरुणः, कोऽत्र दोषः, नद्यनेनातिचिरकालपरिचितो विरुद्धाचारोऽनुष्ठितः, युक्तमस्योपदेष्टुं जलकूपप्रवेश इति विचिन्त्य तत्प्रवेशमार्गमुपादिशत् । ततः सन्तुष्टो दुष्टोरगो महागजोपदिष्टमार्गेण कूपाभ्यन्तरं प्रविश्य भयवशात् तरलतारकाणामेकत्र पिण्डीभूतानां मण्डूकानामायुरपचयमिव जलमागलं पीत्वा दाहश्रममपनयन् ततो गते तस्मिन् दिवसे परेद्युस्तेन मार्गेण कूपं प्रविश्य द्विशान् मण्डूकानभक्षयत् । एवमहरहस्तेन भक्ष्यमाणेषु मण्डूकेषु सर्वे मण्डूका महागजमभिवन्द्य स्वामिन्! यदा स्वेष दुष्टसर्पोऽस्मिन् प्रविष्टस्तदाप्रभृत्यस्मत्कूपमल्पमिव दृश्यते । नूनमनेन भवितव्यं भक्षितम् । भीता वयम् । देव! त्रायस्वेति व्यजिज्ञपन् । अहो! कष्टमभिहितमिदम् । नहि माम(न)नुमन्य किञ्चित् करोति स साधुः । भवद्भिरेवं वक्तुमयुक्तम् । विगतभियो भवन्तु भवन्त इत्याह । अलं प्रतिकूलेन दैवेन कदाचित् तज्ज्ञास्यत इति अवोचन् मण्डूकाः । एवं गतेषु कतिपयदिनेषु कस्मिंश्चिद् दिने महागजः पुण्डरीकरिपुमण्डलमिव राहुणा दुष्टोरगेण शनैःशनैर्गृह्यमाणं मण्डूकमण्डलमवलोक्य अहो वृन्दमिदं दर्दुराणां दुरात्मना दुष्टोरगेण भक्षितमायमिव दृश्यते । तदस्माकं पुरैवोक्तं मण्डूकैर्मया मृष्टव्योऽयं पापक-

प्रकम्पितां ददर्श । तां दृष्ट्वा ससाध्वसहृदयश्चाशङ्क्येदमब्रवीत् — केनेयं कम्पिता शाखा वानरेण वा । यद्ययं पुरुषः स स्यात् तदेषं कथयिष्यतीत्येवमाशङ्क्य सर्वं न कथञ्चिद् व्यक्तं भविष्यतीति विषण्णहृदयस्तं देशमतिक्रम्य स्वसैन्यं दृष्ट्वा तत्क्षणात् स्वां पुरीं प्राविशत् । तं दृष्ट्वाभ्युत्थिताः सर्वे पौराः देव ! कश्मीरः क गतवान्, नात्रागत इत्यपृच्छन् । तच्छ्रुत्वा अहं खलु किं नात्रागतः, कश्मीरं नह्यहमद्राक्षमित्युक्त्वा सानुकम्पं तदन्वेषणार्थं कांश्चित् पुरुषान् सम्प्रेषयामास । तस्मिन् वने समन्तात् परिदृश्य ते वितथप्रयत्नाः प्रतिनिवृत्य नहि तं पश्याम इति तस्मै व्यजिज्ञपन् । तच्छ्रुत्वा विश्वावसुर्निर्विण्ण इव तेन प्रकम्पितशाखाशल्येन प्रदह्यमानः कञ्चित् कालमनयत् । ततः कदाचिन्नगरपरिशोधनार्थं कञ्चुकावच्छन्नशरीरे दृढोत्पीडो ध्वान्तज्वालामालयेव नीलजलदः प्रतिरथ्यं प्रतिद्वारं रात्रौ तां पुरीं पर्यटन् यदृच्छया कस्यचित् तक्ष्णो गृहपार्श्वमगात् । तदा स तक्षा निजदयितावियोगजनितान्तश्शोकापास्तनिद्रोऽनवरतं तामेव चिन्तयन्निदमवोचत्—

सुवृत्ते ! पद्मपत्राक्षि ! हंससारसगामिनि ! ।
हृदये मम तिष्ठन्ती शाखा विश्वावसोरिव ॥

इति । तच्छ्रुत्वा निखातशल्यमिव हृदयमुद्वहन् परितो विलोक्य कथमनेन ज्ञातमिति बहुधा विचिन्त्य व्याकुलहृदयः स्वभवनमुपगम्य नष्टनिद्रः प्रोषिताधिषणः क्षणदाशेषमनयत् । ततः कथञ्चिदपनीतायां शर्वर्यां प्रभात एवोत्थाय तं तक्षाणमाहूय किमुक्तं त्वया शर्वर्याम्, सत्यं वदेत्युक्तवान् । देव ! मम प्रियां मृतामपि तद्गौरवात् तामेव ध्यायन्निदमब्रवं सुवृत्तेति । तच्छ्रुत्वा (के)नेदं त्वया विज्ञातमिति पृष्टवान् विश्वावसुः । स तु विज्ञापयामास — कस्यचिद् गृहसाधनाय सुस्निग्धांस्तम्भानन्वेषयित्वा वृक्षशाखाधिरूढेन मया राज्ञा हन्यमानो दृष्टः कश्मीरः । तं दृष्ट्वा प्रतिनिवृत्तं प्रकम्पितशाखामवलोक्य भीतबहिर्गच्छन्तं प्राद्राक्षमिति विज्ञापयामास । अहो यथोक्तं मया पूर्वं

तथैवापतितम् । धिग् जीवितेन परिवादैकभाजनेन । अहं न जीवामीति स्वयमात्मानं हत्वा विश्वावसुर्ममार । तं दृष्ट्वा वसुभागः श्लोकमवोचत्—

> भृत्यवैरं समुत्पन्नमिति निश्चित्य नीचवत् ।
> विश्वावसुर्नृपः स्वेन दुःखेन मरणं गतः ॥

तस्मादतिलोभो न कर्तव्यो ममाप्येतत्कूपप्रवेशोपायेनागतेन जलदानेना(नु)गृहाणेत्युक्तवन्तं दुष्टसर्पं प्रत्यभाषत महागजः । सखे! माऽभिहितं भवता, अद्यप्रभृति ममाप्यतिलोभो न कर्तव्य इति । तच्छ्रुत्वा कूपवासिनो मण्डूकाः सर्वे हन्त स्ववशतामनयत् स्वामिनं दुष्टोरगः । इतःप्रभृति किं बहुना अस्माकमुपागतः खलु विनाशकाल इति नत्रसुः । एवमन्योन्यं प्रवृद्धस्नेहयोर्गच्छति काले कस्मिंश्चिद् दिवसे पिपासाकुलं दुष्टोरगं दृष्ट्वा सञ्जातकरुणः, कोऽत्र दोषः, नद्यनेनातिचिरकालपरिचितो विरुद्धाचारोऽनुष्ठितः, युक्तमस्योपदेष्टुं जलप्रवेश इति विचिन्त्य तत्प्रवेशमार्गमुपादिशत् । ततः सन्तुष्टो दुष्टोरगो महागजोपदिष्टमार्गेण कूपाभ्यन्तरं प्रविश्य भयवशात् तरलतारकाणामेकत्र पिण्डीभूतानां मण्डूकानामायुरपचयमिव जलभागलं पीत्वा दाहश्रममपनयन् ततो गते तस्मिन् दिवसे परेद्युस्तेन मार्गेण कूपं प्रविश्य द्वित्रान् मण्डूकानभक्षयत् । एवमहरहस्तेन भक्ष्यमाणेषु मण्डूकेषु सर्वे मण्डूका महागजमभिवन्द्य स्वामिन्! यदा त्वेष दुष्टसर्पोऽस्मिन् प्रविष्टस्तदाप्रभृत्यस्मत्कूपमल्पमिव दृश्यते । नूनमनेन भक्षितम् । भीता वयम् । देव! त्रायस्वेति व्यजिज्ञपन् । अहो! कष्टमभिहितमिदम् । नहि माम(न)नुमन्य किञ्चित् करोति स साधुः । भवद्भिरेवं वक्तुमयुक्तम् । विगतभियो भवन्तु भवन्त इत्याह । अलं प्रतिकूलेन दैवेन कदाचित् तज्जास्यत इति अवोचन् मण्डूकाः । एवं गतेषु कतिपयदिनेषु कस्मिंश्चिद् दिने महागजः पुण्डरीकरिपुमण्डलमिव राहुणा दुष्टोरगेण शनैःशनैर्गृह्यमाणं मण्डूकमण्डलमवलोक्य अहो वृन्दमिदं दर्दुराणां दुरात्मना दुष्टोरगेण भक्षितमापमिव दृश्यते । तदस्माकं पूर्वोक्तं मण्डूकैर्मया प्रष्टव्योऽयं पापक-

